# Laghu Siddhanta Kaumudi

# लघुसिद्धान्तकौमुदी

श्रीमदुत्पल कौशिक वेङ्कटनरसिंहाचार्यैः

स्विकया लघुटीकया सह संशोधिता

चेन्नपुर्याम्

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकाशिता

१९३७

ॐ

नमो मुनित्रयाय

# ॥ लघुसिद्धान्तकौमुदी ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
येन धौता गिरः पुंसां विमलैश्शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥
वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ।
पाणिनिं सूत्रकारञ्च प्रणतोऽस्मि मुनित्रयम् ॥

ओन्नमः पाणिनि - कात्यायन - पतञ्जलिभ्यश्शब्दविद्यासम्प्रदाय
प्रवर्तकेभ्यो मुनिभ्यो महद्भ्यो गुरुभ्यः ॥

नत्वा सरस्वतीं देवीं [1]शुद्धां [2]गुण्यां करोम्यहम् ।
[3]पाणिनीयप्रवेशाय [4]लघुसिद्धान्तकौमुदीम् ॥

1 दोषरहिताम् ॥ 2 प्रशस्ताः गुणाः यस्याः । ताम्-शब्दव्युत्पत्तिज्ञानादिप्रशस्तगुणवतीमित्यर्थः ॥ 3 पाणिनिना प्रोक्तं पाणिनीयं-महाव्याकरणं । तस्मिन् बुद्धेः प्रवेशार्थम् ॥ 4 लघ्वी चासौ सिद्धान्तकौमुदी च । ताम्-ग्रन्थसङ्ख्यया स्वल्पामपि नानाशब्दसिद्धान्तप्रकाशिकामित्यर्थः ॥

## ॥ अथ संज्ञाप्रकरणम् ॥

---

**अइउण् १ ऋलृक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४** इ [1]माहेश्वराणि सूत्रा[2]ण्यणादिसंज्ञार्थानि । एषा[3]मन्त्याः [4]इतः लण्सूत्रेऽकारश्च । [5]हकारादिष्वकार उच्चारणार्थः । हल् व्यञ्जनम्

**हलन्त्यम् १-३-३** उपदेशेऽन्त्यं हलित्स्यात् । [6]उपदेश [7]आद्योच्चारणम् सूत्रेष्वदृष्टं पदं [8]सूत्रान्तरादनुवर्तनीयं सर्वत्र । **अदर्शनं लोप १-१-६०** [9]प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् । **तस्य लोपः १-३-** तस्येतो लोपस्स्यात् । [10]णादयोऽणाद्यर्थाः । **आदिरन्त्येन सहेत १-१-७१** [11]अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात्

---

1 महेश्वरादागतानि माहेश्वराणि ताण्डवनृत्यसमये शिवेन नवपञ्चवा ताडितायाः ढक्कायास्सकाशादुत्पन्नानीत्यर्थः ॥ 2 अण् आदिः यासां ताः अणा दयः । अणादयश्च ताः संज्ञाश्च अणादिसंज्ञाः । ताः अर्थः = प्रयोजनं येषां तानि इति विग्रहः ॥ 'अइउण्' इत्यत्र अकारादिणकारपर्यन्तानां वर्णानां संक्षेपेण संग्रह अण्, अण् प्रत्याहार इतियावत् ॥ एवमग्रेऽपि ॥ आदिशब्देन इण्, अक्, अच् इत्यादयः ग्राह्याः । इण् प्रत्याहारस्तु लण् सूत्रस्थणकारेणैव ग्राह्यः ॥ 3 अन्ते भवाः अन्त्याः सूत्रान्तस्स्थाः ण्, क्, च्, इत्यादयः ॥ 4 यन्तीति इतः-इत्संज्ञकाः ॥ 5 हयव इत्यादिषु ॥ 6 उप = आदौ । दिश्यते = उच्चार्यते । इति उपदेशः 7 आदौ भवाः आद्याः-शिवपाणिन्यादयः । तैः कृतं डमरुमुखादिद्वारोच्चारणम् 8 अष्टाध्यायीक्रमेण पूर्वोक्तादन्यसूत्रात् अनुवृत्तिं कृत्वा गृहीतव्यम् ॥ 9 विद्यमानस्येत्यर्थः ॥ 10 अइउण् इत्यादिसूत्रेषूक्ताः-ण्, क्, इत्यादयः ॥ 11 सूत्रां भवेन ण्, क्, इत्यादिना ॥

यथा-अणिति अ इ उ वर्णानां संज्ञा । एवमच् हल् अलित्यादयः । अयमेव प्रत्याहारः । अत्रेतां न ग्रहणं ; अनुनासिक इत्यादिनिर्देशात् । **ऊकालोऽज्झ्रस्वदीर्घप्लुतः १-२-२७** उश्च ऊश्च ऊ३ श्च वः । [1]वां [2]काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा । [3]**उच्चैरुदात्तः १-२-२९** [4]**नीचैरनुदात्तः १-२-३०** [5]**समाहारः स्वरितः १-२-३१** स [6]नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा । **मुखनासिकावचनोऽनुनासिकः १-१-८** मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञस्स्यात् ॥ तदित्थम्-अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । ऌवर्णस्य द्वादश ; तस्य दीर्घाभावात् ॥ [7]एचामपि द्वादश ; तेषां ह्रस्वाभावात् ॥ [8]**तुल्यास्यप्रयत्नं सवर्णम् १-१-९** ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य [9]येन तुल्यं [10]तन्मिथस्सवर्णसंज्ञं स्यात् ॥ अ[11]कुह [12]विसर्जनीयानां कंठः । इ[13]चुयशानां तालु । ऋ

---

1 पूर्वोक्तानां ह्रस्वदीर्घप्लुतानां त्रयाणामुकाराणाम् ॥ 2 उच्चारणकालः ॥ 3 तालुकंठादिवर्णाभिव्यक्तिस्थानानामूर्ध्वभागे निष्पन्नः अच् उदात्त इत्यर्थः ॥ 4 तत्स्थानानामधोभागे निष्पन्नः ॥ 5 समाह्रीयेते=समुच्चीयेते उदात्तानुदात्तत्ववर्णधर्मावनेनेति समाहारः ॥ 6 ह्रस्वत्वादिभेदेन च युक्तः ॥ 7 एच् प्रत्याहारस्थानां ए ओ ऐ औ वर्णानाम् ॥ 8 आस्ये भवं आस्यं=ताल्वादिस्थानं । प्रकृष्टः यत्नः प्रयत्नः । आस्यं च प्रयत्नश्च आस्यप्रयत्नौ तुल्यौ आस्यप्रयत्नौ यस्य=वर्णसमूहस्य तदिति विग्रहः ॥ 9 वर्णेन ॥ 10 यद्वर्णसम्बन्धिताल्वादिस्थानं यद्वर्णसम्बन्धिताल्वादिस्थानेन तुल्यं तत् इत्यर्थः ॥ 11 क ख ग घ ङाः कुशब्देनोच्यन्ते ॥ 12 विसर्गसंज्ञकस्य ॥ 13 च छ ज झ ञाः ॥

[1]टुरषाणां मूर्धा । ऌ [2]तुलसानां दन्ताः । उ [3]पू [4]पध्मानीयान मोष्ठौ । ञ म ङ णनानां नासिका च । [5]एदैतोः कंठतालु [6]ओदौतोः कंठोष्ठम् । वकारस्य दन्तोष्ठम् । [7]जिह्वामूलीयस्य जिह्वा मूलम् । नासिकाऽनुस्वारस्य ॥ यत्नो द्विधा—आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा—[8]स्पृ[9]ष्टेषत्स्पृ[10]ष्टेषद्विवृत[11]विवृत[12]संवृतभेदात् । तत्र स्पृष्टं प्रयतनं [13]स्पर्शानाम् ॥ ईषत्स्पृष्टमन्तस्स्थानाम् । ईषद्विवृतमूष्मणाम् ॥ विवृतं स्वराणाम् ॥ ह्रस्वस्यावर्णस्य [14]प्रयो संवृतम् । [15]प्रक्रियादशायां तु विवृतमेव ॥ [16]बाह्ययत्नस्त्वेकादशध —विवारस्संवारश्श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदा त्तोऽनुदात्तः स्वरितश्चेति ॥ [17]खरो [18]विवाराश्श्वासा अघोषाश्च । हशस्संवारा नादा घोषाश्च ॥ वर्गाणां प्रथमतृतीयपञ्चमा यण [19]श्चाल्पप्राणाः ॥ वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः कादयं मावसानाः स्पर्शाः यणोऽन्तस्स्थाः ॥ शल ऊष्माणः ॥ अचः स्वराः ।

---

1 ट ठ ड ढ णाः ॥ 2 त थ द ध नाः ॥ 3 प फ ब भ माः ॥ 4 – ॅप ॅफ योः प्रागर्धविसर्गसदृशस्य ॥ 5 ए ऐ ॥ 6 ओ औ ॥ 7 – ॅक – ॅख इत्यादे क ख योः प्रागर्धविसर्गसदृशस्य ॥ 8 यस्योच्चारणे जिह्वाग्रादीनां कंठाद्यवयवैः पूर्णस्पर्शः सः स्पृष्टप्रयत्नः ॥ 9 अल्पस्पर्शो ईषत्स्पृष्टः ॥ 10 उच्चारणकाले त्ववयवा नामल्पविवरणे सति ईषद्विवृतः ॥ 11 पूर्णतया विवरणेतु विवृतः ॥ 12 अवयव नामाकुञ्चनहेतुस्संवृतः ॥ 13 कादयो मावसानास्स्पर्शा इत्यग्रे वक्ष्यति 14 वाक्ययोजनायाम् ॥ 15 व्याकरणरीत्या शब्दसाधनावस्थायाम् 16 वर्णोत्पत्तेः पश्चादुत्पन्नः ॥ 17 खर् प्रत्याहारः 18 विवारस्थानप्रयत्नवन्तः एवमग्रेऽपि ॥ 19 चकारेण अचामपि सङ्ग्रहः । अतएव भाष्यध्वनितमल्प प्राणवत्त्वं अचां सङ्गच्छते ॥

ᳵक ᳵख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः ॥ ᳶप ᳶफ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः ॥ अं अः इत्यचः परावनुस्वारविसर्गौ ॥ **ऋलृवर्णयोर्मिथस्सावर्ण्यं वाच्यम्** (वा १५७) **अणुदित्सवर्णस्य** [1]**चाप्रत्ययः** १-१-६९ अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् ॥ [2]अत्रैवाण् परेण णकारेण ॥ कु चु टु तु पु एते उदितः ॥ तदेवम्—अ इत्यष्टादशानां संज्ञा ॥ तथेकारोकारौ ॥ ऋकारस्त्रिंशतः ॥ एवं लृकारोऽपि ॥ एचो द्वादशानाम् ॥ अनुनासिकाननुनासिकभेदेन यवला द्विधा ॥ तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञा ॥ **परस्सन्निकर्षस्संहिता** १-४-१०९ वर्णानामतिशयितः सन्निधिः [3]संहितासंज्ञस्स्यात् ॥ **हलोऽनन्तरास्संयोगः** १-१-७ [4]अज्भि [5]रव्यवहिता [6]हलः संयोगसंज्ञास्स्युः ॥ **सुप्तिङन्तं पदम्** १-४-१४ [7]सुबन्तं तिङन्तञ्च पदसंज्ञं स्यात् ॥ **ह्रस्वं लघु** १-४-१० **संयोगे गुरु** १-४-११ संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ॥ **दीर्घं च** १-४-१२ इति संज्ञाप्रकरणम् ॥

---

1 प्रतीयते—विधीयते इति प्रत्ययः । न प्रत्ययः अप्रत्ययः इति विग्रहः ॥ अविधीयमान इत्यर्थः ॥ 2 पूर्वेणैवाण्ग्रहास्सर्वे परेणैवेण्ग्रहा मताः । ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥ 3 अर्धमात्रातिरिक्तकालव्यवधानाभावः संहिता ॥ 4 स्वरसंज्ञितैः ॥ 5 व्यवधानरहिताः ॥ 6 हल् प्रत्याहारघटितवर्णाः ॥ अत्र हलो च हलश्चेत्येकशेषः । तेन क्ष इत्यादौ द्वयोरपि अव्यवहितवर्णयोः संयोगसंज्ञा लभ्यते ॥ 7 सु, औ, जस्, इत्यादयः प्रत्याहारस्थाः अग्रे वक्ष्यमाणाः प्रत्ययाः सुप्संज्ञकाः । तेऽन्ते यस्य तत् सुबन्तम् ॥ तिप्, तस्, झि, इत्यादयः प्रत्याहारस्था वक्ष्यमाणाः प्रत्ययास्तिङ् संज्ञकाः । तेऽन्ते यस्य तत्तिङन्तम् । विभक्त्यन्तमित्यर्थः ॥

## ॥ अथाच्सन्धिप्रकरणम् ॥

---

**षष्ठी स्थानेयोगा १-१-४९** अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा बोद्धव्या । स्थानं च प्रसङ्गः ॥ **तस्मिन्निति निर्दिष्टे पूर्वस्य १-१-६६** सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोद्धव्यम् ॥ **संहितायाम् ६-१-७२** इत्यधिकृत्य ॥ **इको यणचि ६-१-७७** इकः स्थाने यण् स्यादचि संहितायां विषये सुधी+उपास्यः इति स्थिते ॥ **स्थानेऽन्तरतमः १-१-५०** [1]प्रसङ्गे सति [2]सदृशतम आदेशस्स्यात् । यत्राऽनेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः । सुध्+य्+उपास्यः इति जाते ॥ **अनचि च ८-४-४७** अचः परस्य यरो द्वे वा स्तो नत्वचि ॥ **झलां जश् झशि ८-४-५३** स्पष्टम् ॥ इति धकारस्य दकारः ॥ **संयोगान्तस्य लोपः ८-२-२३** [3]संयोगान्तं यत् पदं तदन्तस्य लोपस्स्यात् ॥ **अलोऽन्त्यस्य १-१-५२** [4]षष्ठीनिर्दिष्टान्त्यस्याल आदेशस्स्यात् । इति यलोपे प्राप्ते ॥ **यणः प्रतिषेधो वाच्यः, (वा. ४८०६)** सुद्ध्युपास्यः मध्वरिः । धात्त्रंशः । लाकृतिः ॥ **एचोऽयवायावः ६-१-७८** एचः क्रमात् अय् अव् आय् आव् [5]एते स्युरचि ॥ **यथासंख्यमनुदेशस्समानाम् १-३-१०** समसम्बन्धी विधि [6]र्यथासंख्यं स्यात् ।

---

1 एकस्य वर्णस्य स्थाने अनेकादेशप्राप्तौ सत्याम् ॥ 2 ताल्वादिस्थानेन अर्थेन, प्रयत्नेन, एकद्विमात्रादि परिमाणेन च स्थानिना सदृशतमः आदेशो भवतीत्यर्थः ॥ 3 अनेक व्यञ्जनसमुदायः संयोगः । सः अन्ते यस्य तत् ॥ 4 षष्ठी विभक्तिप्रत्ययनिर्दिष्टस्य अन्त्यस्य ॥ 5 आदेशाः ॥ 6 उक्तसंख्याक्रमेण ॥

हरये । विष्णवे । नायकः । पावकः ॥ **यस्मिन्विधिस्तदादावल्ग्रहणे** अल्ग्राहके सप्तम्यन्ते विशेषणीभूते यो विधिस्स तदादौ ज्ञेयः ॥ **वान्तो यि प्रत्यये ६-१-७९** यकारादौ प्रत्यये परे [1]ओदौतोः अव् आव् एतौ स्तः गव्यम् । नाव्यम् ॥ [2]**अध्वपरिमाणे च (वा-३५४४)** [3]गव्यूतिः ॥ **अदेङ्गुणः १-१-२** [4]अत् एङ् च गुणसंज्ञस्स्यात् ॥ **तपरस्तत्कालस्य १-१-७०** तः परो यस्मात् स च ता [5]त्पर[6]श्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् ॥ **एकः पूर्वपरयोः ६-१-८४** इत्यधिकृत्य ॥ **आद्गुणः ६-१-८७** अवर्णादचि परे [7]पूर्वपरयोरेको गुणोऽन्तरतम [8]आदेशस्स्यात् ॥ उपेन्द्रः । गङ्गोदकम् ॥ **उपदेशेऽजनुनासिक इत् १-३-२** उपदेशेऽनुनासिकोऽजित्संज्ञस्स्यात् ॥ [9]प्रतिज्ञानुनासिक्याः [10]पाणिनीयाः ॥ लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोस्संज्ञा ॥ **उरण् रपरः १-१-५१** ऋ इति त्रिंशतस्संज्ञेत्युक्तम् ॥ तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते ॥ कृष्णर्धिः । तवल्कारः ॥ **लोपश्शाकल्यस्य ८-३-१९** अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे ॥ **पूर्वत्रासिद्धम् ८-२-१** सपादसप्ताध्या-

---

1 ओकारौकारयोः ॥ 2 मार्गप्रमाणे ॥ 3 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः ॥ 4 अकारः एकारौकारौ च ॥ 5 वर्णइति शेषः ॥ 6 उच्चारणकालसदृशकालविशिष्टस्यैव । नतु सः ह्रस्वदीर्घप्लुतादिसवर्णग्राहकः भवतीत्यर्थः ॥ 7 पूर्वपरवर्णयोस्स्थाने ॥ 8 स्थानिनिवर्तकः ॥ 9 प्रतिज्ञायते = अभ्युपगम्यत इति प्रतिज्ञा, कर्मण्यङ् । प्रतिज्ञातमित्यर्थः ॥ अनुनासिकस्य भावः आनुनासिक्यम्, ष्यङ् ॥ प्रतिज्ञा अनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः, येषामित्संज्ञा कार्यानुसारतो दृश्यते त एव अनुनासिका इति गुरुपरम्पराज्ञानेन कृतनिश्चया इत्यर्थः ॥ 10 पाणिनेः छात्राः पाणिनीयाः ॥

र्यी प्रति [1]त्रिपाद्यसिद्धा ॥ त्रिपाद्या [2]मपि पूर्वं प्रति परं शास्त्र [3]मर्
द्धम् ॥ (हरे+इह) हरइह । हरयिह ॥ (विष्णो+इह) वि
इह, विष्णविह ॥ **वृद्धिरादैच् १-१-१** [4]आदैच्च वृद्धिसंज्ञस्स्यात्
**वृद्धिरेचि ६-१-८८** आदेचि परे वृद्धिरेकादेशस्स्यात् ॥ गुणापवादः
कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥ **एत्येधत्यूठ्**
**६-१-८९** अवर्णादेजाद्यो [5]रेत्येधत्यो [6]रूठि च परे वृद्धिरेकादेशस्स्य
पररूपगुणापवादः ॥ उपैति । उपैधते । प्रष्ठौहः ॥ एजाद्योः किम्
उपेतः । मा भवान् प्रेदिधत् ॥ ***अक्षादूहिन्यामुपसंख्यान**
**(वा-३६०४)** [7]अक्षौहिणी सेना ॥ ***प्रादूहोढोढ्येषैष्येषु (वा-**
**७६०५)** प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः ॥ **ऋते च तृतीय**
**समासे (वा-३६०७)** सुखेन ऋतः सुखार्तः ॥ तृतीयेति किम्
[8]परमर्तः ॥ **प्रवत्सतरकम्बलवसना[9]र्णदशानामृणे (वा-३६०८-**
[10]प्रार्णम्, [11]वत्सतरार्णम्, इत्यादि ॥ **उपसर्गाः क्रियायां**

---

1 त्रयाणां पादानां समाहारः त्रिपादी ॥ यद्वा त्रयः पादा यस्यास्सा त्रिपा
सूत्रपाठेऽष्टमाध्यायस्यान्तिमास्त्रयः पादा इत्यर्थः ॥ 2 प्रतिसूत्रमिति शेषः ॥ 3
शास्त्रस्य प्राप्तावपि तत्पूर्वशास्त्रदृष्ट्या तन्न दृश्यत इत्यर्थः ॥ 4 'आ ऐ औ'
वर्णाः ॥ 5 'इण् गतौ, एध वृद्धौ' इत्येतयोः ॥ 6 'वाहऊठ्' इत्यादावुक्त
7 अक्षाणां ऊहिनी इत्येवात्र विग्रहः ॥ अक्षाणामूहः अस्या अस्तीति विग्रहे
अक्षोहिणीत्येव स्यात्; तथा अक्षशब्दस्य अर्थवदूहिनीशब्दपरकत्वाभावात्
'अक्षौहिण्यस्सप्ततिरष्टशतान्येकविंशतिसहस्रम् । द्विरदास्तथारथास्त्त्रिप
गुणकास्तुरङ्गनराः ॥' 8 परमश्चासौ ऋतश्च परमर्तः ॥ 9 अत्र ऋणशब्दो प्र
नत्वर्णशब्दः ॥ 10 प्रगतं ऋणम् प्रार्णम् ॥ 11 वत्सतरस्य = शिशुवत्सस्य । ऋ
इति विग्रहः, वत्सतरमधिकृत्य वा तद्ग्रहणार्थं वा यदृणं क्रियते तदित्यर्थः

१-४-५९ प्रादयः क्रियायोगे उपसर्गसंज्ञास्स्युः ॥ प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप । एते प्रादयो द्वाविंशतिः ॥ [1]**भूवादयो धातवः** १-३-१ क्रियावाचिनो भ्वादयो धातुसंज्ञास्स्युः ॥ **उपसर्गादृति धातौ** ६-१-९१ अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशस्स्यात् ॥ प्रार्छति ॥ **एङि पररूपम्** ६-१-९४ [2]आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशस्स्यात् ॥ प्रेजते । उपोषति ॥ **अचोऽन्त्यादि टि** १-१-६४ अचां मध्ये योऽन्त्यः स आदिर्यस्य तत् टिसंज्ञं स्यात् ॥ ***शकन्ध्वादिषु पररूपं वाच्यम्** (वा-३६३२) तच्च टेः । शकन्धुः । कर्कन्धुः । मनीषा । लाङ्गलीषा । आकृतिगणोऽयम् मार्तण्डः ॥ **ओमाङोश्च** ६-१-९५ ओमि आङि चात्परे पररूपमेकादेशस्स्यात् । शिवायोन्नमः (शिव, आ+इहि—एहि) शिवेहि ॥ **अकस्सवर्णे दीर्घः** ६-१-१०१ अकस्सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशस्स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः होतृकारः ॥ **एङः पदान्तादति** ६-१-१०९ पदांतादेङोऽति परे पूर्वरूपमेकादेशस्स्यात् ॥ हरेऽव । विष्णोऽव ॥ **सर्वत्र विभाषा गोः** ६-१-१२२ लोके वेदे चैङन्तस्य गोरति वा [3]प्रकृतिभावः पदांते ॥ गो अग्रम् । गोऽग्रम् ॥ एङन्तस्य किम्? चित्रग्वग्रम् ॥

---

1 भूश्च वाश्च भूवौ । आदिश्च आदिश्च आदी । प्रथम आदिशब्दः प्रभृति वचनः । द्वितीयः प्रकारवचनः । भूवा आदी येषां ते इति विग्रहः ॥ तथा च भूप्रभृतयः वासदृशाश्च ये ते धातुसंज्ञिका इत्यर्थः ॥ वा धातुसादृश्यं च क्रियावाचकत्वेन ॥
2 अवर्णान्तात् ॥ 3 संहिताकालेऽप्यसन्धिरूपत्वेनावस्थानम् ॥

पदान्ते किम्? [1]गोः ॥ [2]**अनेकाल् शित्सर्वस्य १-१-५५** इति प्राप्ते ॥ **ङिच्च १-१-५३** [3]ङिदनेकालप्यन्त्यस्यैव स्यात् ॥ **अवङ् स्फोटायनस्य ६-१-१२३** पदान्ते एङन्तस्य गोरवङ् वाऽचि ॥ गोऽग्रम्, गवाग्रम् ॥ पदान्ते किम्? [4]गवि ॥ **इन्द्रे च ६-१-१२४** गोरवङ् स्यादिन्द्रे ॥ गवेन्द्रः ॥ **वाक्यस्य टेः प्लुत उदात्तः ८-२-८२** इत्यधिकृत्य ॥ **प्रत्यभिवादेऽशूद्रे ८-२-८३** अशूद्रे [5]प्रत्यभिवादे वाक्यस्य टेः प्लुतः ॥ [6]अभिवादये देवदत्तोऽहम् ॥ आयुष्मानेधि देवदत्त(३)अ ॥ ***स्त्रियां न (वा-४८६४)** अभिवादये गार्ग्यहम् । भो आयुष्मती भव गार्गि ॥ ***भोराजन्यविशां वेति वाच्यम् (वा-४८६५)** आयुष्मानेधि भो(३)ः आयुष्मानेधीन्द्रवर्म(३)न् । आयुष्मानेधीन्द्रपालित (३)अ ॥ **दूराद्धूते च ८-२-८४** दूरात् [7]सम्बोधने वाक्यस्य टेः प्लुतस्स्यात् ॥ [8]**प्लुतप्रगृह्या अचि नित्यम्**

---

1 षष्ठीविभक्तौ गो×अस् इति स्थिते अपदान्तेऽपि प्रकृतिभावस्स्यादित्यर्थः 2 अनेकः अल् यस्य सः अनेकाल्। शकारः इत् यस्य सः शित्। अनयोस्समाहारद्वंद्वः॥ 3 ङकारः इत् यस्य सः ङित् ॥ 4 सप्तमीविभक्तौ, गो×इ इत्यत्रापि स्यादित्यर्थः ॥ 5 अभिवादयन्तं शिष्यादिमाशिषं प्रयुज्यमानो गुर्वादिः यत्संप्रभाषते स प्रत्यभिवादः ॥ तत्प्रकारस्तु मनुना दर्शितः—'आयुष्मान् भव सौम्येति विप्रो वाच्योऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः' इति । एतेन अभिवादयमानस्य नाम सम्बुद्ध्यन्तं प्रयुज्य नाम्नोऽन्तेऽकारश्च वाच्यः । यथा—आयुष्मान् भव देवदत्त (3) अ ॥ इति ॥ 6 आशीर्वचनमिति विज्ञापयामीत्यर्थः ॥ 7 पराङ्मुखमभिमुखीकृत्य 'यत्किंचिदर्थबोधने ॥ 8 प्लुतसंज्ञकाः प्रगृह्यसंज्ञकाश्च ॥

६-१-१२५ एतेऽचि [1]प्रकृत्या स्युः ॥ [2]एहि कृष्ण(३) अत्र गौश्चरति ॥ **ईदूदेद्द्विवचनं प्रगृह्यम् १-१-११** ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् ॥ हरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ ॥ **अदसो मात् १-१-१२** अस्मात् परावीदूतौ प्रगृह्यौ स्तः ॥ अमी ईशाः । रामकृष्णावमू आसाते ॥ मात् किम्? [3]अमुकेऽत्र ॥ **प्राग्रीश्वरान्निपाताः १-४-५६** इत्यधिकृत्य ॥ **चादयोऽसत्वे १-४-५७** अद्रव्यार्थाश्चादयो निपातास्स्युः ॥ **प्रादयः १-४-५८** एतेऽपि तथा ॥ **निपात एकाजनाङ् १-१-१४** एकोऽच् निपात आङ् वर्जः प्रगृह्यः ॥ [4]इ इन्द्रः । [5]उ उमेशः ॥ [6]'वाक्यस्मरणयोरङित्' आ एवं नु मन्यसे । आ एवं किल तत् ॥ अन्यत्र ङित् ॥ आ=ईषत् । उष्णम्-ओष्णम् ॥ **ओत् १-१-१५** ओदन्तो निपातः प्रगृह्यः ॥ अहो ईशाः ॥ **संबुद्धौ शाकल्यस्येतावनार्षे १-१-१६** सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो+इति-विष्ण इति, विष्णविति ॥ **मय उञो वो वा ८-३-३३** [7]मयः परस्योञो वो वाऽचि ॥ किम्वुक्तं । किमु उक्तम् ॥ वस्यासिद्धत्वान्नानुस्वारः ॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६-१-१२७**

---

1 सन्धिकार्यरहिताः स्युः इत्यर्थः ॥ 2 अत्र 'दूराद्धूते' चेत्यनेन प्लुतसंज्ञा ॥ 3 असति माद्ग्रहणे 'ईदूदेत्' इत्यस्मात् एकारोऽप्यनुवर्तेत । 'अमुके×अत्र' इत्यत्रापि प्रकृतिभावः प्रसज्येत ॥ माद्ग्रहणेतु अदश्शब्देमात्परस्यैकारस्यासम्भवात् एकारस्य नानुवृत्तिः ॥ 4 इ वितर्के ॥ 5 उ विस्मये ॥ 6 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित् ॥ 7 मय् प्रत्याहारः ॥

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि ॥ ह्रस्वविधिसामर्थ्यान्न स्वर-सन्धिः । चक्रि अत्र । चक्र्यत्र । पदान्ता इति किम्? गौर्यौ ॥ **अचोरहाभ्यां द्वे ८-४-४६** अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । [1]गौर्य्यौ, नह्यस्ति ॥ **न समासे (वा-६८४)** वाप्यश्वः ॥ **ऋत्यकः ६-१-१२८** ऋति परे पदान्ता अकः प्राग्वद्वा ॥ ब्रह्म-ऋषिः, ब्रह्मर्षिः ॥ पदान्ताः किम्? आर्छत् ॥

॥ इत्यच्सन्धिप्रकरणम् ॥

---

1 अत्र 'अनचि' चेति द्वित्वं न; द्वित्वप्रकरणे 'रहाभ्या' मिति रेफत्वेन साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य यर् शब्दबोधितकार्यभावत्वबाधात्। 'श्रुता-नुमितयोश्श्रुतं बलीयः' इति हि न्यायः ॥

## ॥ अथ हल्सन्धिप्रकरणम् ॥

---

**स्तोः**[1]**श्चुना श्चुः** ८-४-४० सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥ **शात्** ८-४-४४ शात् परस्य तवर्गस्य श्चुत्वं न । विश्नः, प्रश्नः ॥ [2]**ष्टुना ष्टुः** ८-४-४१ स्तोः ष्टुना योगे ष्टुः । रामष्षष्ठः, रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥ **न पदान्ताट्टोरनाम्** ८-४-४२ पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट्ते । पदान्तात् किं? ईट्टे । टोः किम्? सर्पिष्टमम्॥ *अनाम्नवतिनगरीणामिति वाच्यम् । (वा ५०१६) षण्णाम्, षण्णवतिः, षण्णगर्यः ॥ [3]**तोष्षि** ८-४-४३ न ष्टुत्वम् । सन् षष्ठः॥ **झलां जशोऽन्ते** ८-२-३९ पदान्ते झलां जशस्स्युः । वागीशः ॥ **यरोऽनुनासिकेऽनुनासिको वा** ८-४-४५ [4]यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः, एतद्मुरारिः ॥ **प्रत्यये भाषायां नित्यम्** (वा ५०१७) तन्मात्रम्, चिन्मयम् ॥ **तोर्लि** ८-४-६० परसवर्णः । तल्लयः, विद्वाँल्लिखति । नस्यानुना-

---

1 अत्र उद्देश्यविधेय (स्थान्यादेश) योरेव यथासंख्यम् ॥ निमित्तकार्यिणोस्तु न; तथासति शकारयोगे चकारः । तवर्गयोगे चवर्गः इत्यर्थे जाते शकारस्य तवर्गे परे श्चुत्वप्राप्त्यभावात् 'शा' दिति निषेधो व्यर्थस्स्यात् ॥ 2 अत्रापि स्थान्यादेशयोरेव यथासंख्यम् ॥ अन्यथा 'तोष्षि' इति ष्टुत्वनिषेधो व्यर्थस्स्यात् ॥ 3 तवर्गस्य षकारे परे ॥ 4 यर् प्रत्याहारः ॥

सिको लः ॥ **उदः स्थास्तम्भोः पूर्वस्य ८-४-६१** [1]उदः परयोः स्थास्तम्भोः पूर्वसवर्णः । **तस्मादित्युत्तरस्य १-१-६७** पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णांतरेणाऽव्यवहितस्य परस्य ज्ञेयम् ॥ **आदेः परस्य १-१-५४** परस्य यद्विहितं तत् तस्यादेर्बोध्यम् । इति सस्य [2]थः ॥ **झरो झरि सवर्णे ८-४-६५** हलः परस्य झरो वा लोपः सवर्णे झरि ॥ **खरि च ८-४-५५** खरि झलां चरस्स्युः । इत्युदो दस्य तः । उत्थानम्, उत्तंभनम् ॥ **झयो होऽन्यतरस्याम् ८-४-६२** झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । [3]वाग्घरिः, वाग्हरिः ॥ **शश्छोऽटि ८-४-६३** झयः परस्य शस्य छो वा ऽटि । तद्+शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते 'खरि' चेति जकारस्य चकारः । तच्छिवः, तच्शिवः । तच्छ्लोकेन ॥ *__छत्वममीति वाच्यम् (वा ५०२५)__ **मोऽनुस्वारः ८-३-२३** मांतस्य [4]पदस्यानुस्वारो हलि । हरिं वंदे ॥ **नश्चापदान्तस्य झलि ८-३-२४** नस्य मस्य चापदान्तस्य झ-

---

1 अत्र 'तोर्लीति सूत्रात् तोरित्यनुवर्तते । स पञ्चम्यंततया विपरिणम्यते । उदः इति अवयवषष्ठी' तथाच—उदवयवभूततवर्गात् परयोः' इति केचित् वर्णयन्ति ॥ अयमेव सुगमः पन्था ॥ 2 अघोषमहाप्राणप्रयत्नाभ्यां सदृशतम इति भावः ॥ 3 स्थानिभूतः हकारः घोषनादसंवारमहाप्राणाख्ययत्नचतुष्टयविशिष्टः ॥ एतस्य तुल्याभ्यन्तरप्रयत्नवत्सु क ख ग घ ङेषु क ग ङा न भवन्ति ; तेषामल्पप्राणत्वात् । खकारोऽपि न भवति । आघोषश्वासविवारयत्नकत्वात् ॥ किंतु घोषनादसंवारमहाप्राणवान् घकारएव भवति ॥ 4 'उञिचपदे' इत्यतः पदे इति 'हलिसर्वेषा'मित्यतः हलिति चानुवर्तते ॥

स्यनुस्वारः । यशांसि, आक्रंस्यते ॥ [1]**अनुस्वारस्य ययि परसवर्णः ८-४-५८** शान्तः ॥ **वा पदान्तस्य ८-४-५९** त्वङ्करोपि । त्वं करोपि ॥ **मो राजि समः क्वौ ८-३-२५** क्विबन्ते राजतौ परे [2]समो मस्य म एव स्यात् । सम्राट् ॥ **हे मपरे वा ८-३-२६** मपरे हकारे परे मस्य मो वा । किम् ह्मलयति, किं ह्मलयति ॥ **यवलपरे यवला वा (वा ४९०२)** किँय् ह्यः, किंह्यः. किँव् ह्वलयति. किं ह्वलयति । किँल् ह्लादयति । किं ह्लादयति ॥ **नपरे नः ८-३-२७** नपरे हकारे मस्य नो वा । किन्ह्नुते । किं ह्नुते । **ड्सि धुट् ८-३-२९** डात्परस्य सस्य धुड्वा ॥ **आद्यंतौ टकितौ १-१-४६** टित्कितौ यस्योक्तौ तस्य क्रमादाद्यंतौ स्तः । पट्त्सन्तः पट्सन्तः ॥ [3]**ङ्णोः कुक् टुक् शरि ८-३-२८** वा स्तः ॥ [4]**चयो [5]द्वितीयाश्शरि [6]पौष्करसादेरिति वाच्यम् (वा ५०२३)** प्राङ्ख्षष्ठः, प्राङ्-क्षष्ठः, प्राङ् षष्ठः, सुगण्ठ्षष्ठः, सुगण्ट् षष्ठः, सुगण्षष्ठः ॥ **नश्च ८-३-३०** नान्तात् परस्य सस्य धुड्वा । सन्त्सः । सन्सः ॥ **शि तुक् ८-३-३१** पदान्तस्य नस्य शे परे तुग्वा । [7]सञ्छम्भुः, सञ् च्छम्भुः, सञ्च्शम्भुः, सञ्शम्भुः ॥ **ङमो ह्रस्वादचि ङमुण्नित्यम् ८-३-३२** ह्रस्वात् परो यो [8]ङम् तदन्तं यत्पदं तस्मात्

---

1 पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् ॥ 2 उपसर्गस्य ॥ 3 ङकारस्य कुगागमः । णकारस्य टुगागमश्च भवति ॥ 4 चय्प्रत्याहारः ॥ 5 खफछठथाः इत्यर्थः ॥ 6 पौष्करसादिराचार्यः 7 'ञ-छौ ञ-च्छा ञ-चशा ञ-शाविति चतुष्टयम् । रूपाणामिह तुक्छत्व चलोपानां विकल्पनात् ॥ 8 ङम् प्रत्याहारः ॥

परस्याचो नित्यं [1]ङमुट् स्यात् । प्रत्यङ्ङात्मा, सुगण्णीशः, सन्नच्युतः । **समस्सुटि ८-३-५** समो रुस्सुटि ॥ **अत्रानुनासिकः पूर्वस्य तु वा ८-३-२** अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ॥ **अनुनासिकात्परोऽनुस्वारः ८-३-४** अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥ **खरवसानयोर्विसर्जनीयः ८-३-१५** [2]खर [3]यवसाने च पदान्तस्य रस्य विसर्गः ॥ *__सम्पुङ्कानां सो वक्तव्यः__ (वा ४८९२) सँस्स्कर्ता, संस्स्कर्ता ॥ **पुमः खय्यम्परे ८-३-६** [4]अम्परे खयि पुमो रुः । पुँस्कोकिलः, पुंस्कोकिलः ॥ **नश्छव्यप्रशान् ८-३-७** अम्परे [5]छवि नान्तस्य पदस्य रुः । न तु प्रशान्शब्दस्य ॥ **विसर्जनीयस्य सः ८-३-३४** खरि । चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । अप्रशान किम्? प्रशान् तनोति । पदस्येति किम्? हन्ति ॥ **नॄन् पे ८-३-१०** नॄनित्यस्य रुर्वा पे । **कुप्वोः ᳲकᳲपौ च ८-३-३७** कवर्गे पवर्गे च खरि विसर्गस्य ᳲकᳲपौ स्तः, चाद्विसर्गः नॄᳲपाहि, नॄः पाहि, नॄँᳲपाहि, नॄँः पाहि, नॄन् पाहि ॥ **तस्य पर-**

---

1 ङमुडागमः ॥ 2 खरि परतः ॥ 3 यस्मिन्नुच्चारिते सति अव्यवहितोत्तरकाले वर्णान्तराणामुच्चारणाभावः । सः अन्त्यवर्णः अवसानसंज्ञिकः ॥ यद्वा किञ्चिद्वर्णोच्चारणोत्तरं वर्णान्तराणामुच्चारणाभावः अवसानसंज्ञिकः ॥ तत्र प्रथमपक्षे 'खरवसानयो'रित्यत्र खरि परतः रेफस्य विसर्गः । अवसानेतु रेफे स्थानिनि सतीति विषयभेदात् स्थानसप्तमी ॥ द्वितीयपक्षे तु अभावस्यापि बुद्धिकृतं परत्वं बोध्यम् ॥ 4 अम्प्रत्याहारान्तर्गतवर्णः परः यस्मात्तस्मिन् खय्प्रत्याहारान्तर्गतवर्णे परतः ॥ 5 छव् प्रत्याहारः ॥

माम्रेडितम् ८-१-२ द्विरुक्तस्य [1]परमाम्रेडितं स्यात् । **कानाम्रेडिते ८-३-१२** [2]कान्नकारस्य रुराम्रेडिते । काँस्कान् । कांस्कान् । **छे च ६-१-७३** [3]ह्रस्वस्य छे तुक् । शिवच्छाया । **पदान्ता द्वा ६-१-७६** दीर्घात् पदान्ताच्छे तुग्वा । लक्ष्मीच्छाया । लक्ष्मीछाया ॥

॥ इति हल्सन्धिप्रकरणम् ॥

---

1 द्वितीयम् ॥ 2 कान् शब्दस्थस्य नकारस्य ॥ 3 'ह्रस्वस्य पिति कृति तुक्' इति सूत्रात् ह्रस्वस्य तुक्चेत्यनुवर्तते ॥

## ॥ अथ विसर्गसन्धिप्रकरणम् ॥

---

**विसर्जनीयस्य सः** ८-३-३४ खरि । विष्णुस्त्राता ॥ **वा शरि** ८-३-३६ शरि विसर्गस्य विसर्गो वा । हरिः शेते, हरिश्शेते ॥ **ससजुषो रुः** ८-२-६६ पदान्तस्य सस्य [1]सजुषश्च रुस्स्यात् । **अतो रोरप्लुतादप्लुते** ६-१-११३ अप्लुतादतः परस्य रो रुस्स्यादप्लुतेऽति । शिवोऽर्च्यः ॥ **हशि च** ६-१-११४ [2]तथा । शिवो वंद्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि** ८-३-१७ [3]एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते । **हलि सर्वेषाम्** ८-३-२२ भोभगोअघो अपूर्वस्य यस्य लोपस्स्याद्धलि ॥ भो देवाः । भगो नमस्ते । अघो याहि ॥ **रोऽसुपि** ८-२-६९ अह्नो रेफादेशो न तु सुपि ॥ अहरहः । अहर्गणः । **रोरि** ८-३-१४ रेफस्य रेफे परे लोपः ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ६-३-१११ ढरेफयोर्लोपनिमित्तयोः परतः पूर्वस्याणो दीर्घः (पुनर्+रमते) पुनारमते, हरीरम्यः, शम्भूराजते ॥ अणः किम्? तृढः, वृढः ॥ मनस्+रथः इत्यत्र रुत्वे कृते 'हशि' चेत्युत्वे 'रोरी'ति लोपे च प्राप्ते— **विप्रतिषेधे परं कार्यम्** १-४-२ [4]तुल्यबलविरोधे परं कार्यं स्यात् ॥

---

1 सजूष्शब्दस्य ॥ 2 अप्लुतादतः परस्य रो रुस्स्याद्धशि ॥ 3 भोस्पूर्वकस्य भगोस्पूर्वकस्य अघोस्पूर्वकस्य अकारपूर्वकस्य च इत्यर्थः ॥ 4 अन्यत्र चरितार्थयोश्शास्त्रयोरेकत्र लक्ष्ये यौगपद्यसम्भवः तुल्यबलविरोधः ॥

इति प्राप्ते 'पूर्वत्रासिद्ध' मिति 'रोरी' त्यस्यासिद्धत्वादुत्वमेव मनोरथः ॥ **एतत्तदोस्सुलोपोऽकोरनञ्समासे हलि ६-१-१३२** अककारयोरेतत्तदोर्यस्सुस्तस्य लोपो हलि । न तु नञ् समासे ॥ एष विष्णुः, स शम्भुः ॥ अकोः किम्? एषको रुद्रः ॥ अनञ् समासे किम्? असश्शिवः ॥ हलि किम्? एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम् ६-१-१३४** स इत्यस्य सोर्लोपस्स्यादचि पादश्चेल्लोपे सत्येव पूर्येत ॥ श्रु ॥ 'सेमा मविड्ढि प्रभृतिम्। श्लो ॥ 'सैष दाशरथी रामः' ॥

॥ इति विसर्गसन्धिप्रकरणम् ॥

# ॥ अथ शब्दाधिकारः ॥

## ॥ अजन्तपुंलिङ्गप्रकरणम् ॥

[1]अर्थव[2]दधातु[3]रप्रत्ययः प्रातिपदिकम् १-२-४५ धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥ **कृत्तद्धितसमासाश्च** १-२-४६ कृत्तद्धितान्तौ समासश्च तथा स्युः ॥ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** ४-१-२ सु औ जस् इति [4]प्रथमा ॥ अम् औट् शस् इति द्वितीया ॥ टा भ्यां भिस् इति तृतीया ॥ ङे भ्यां भ्यस् इति चतुर्थी ॥ ङसि भ्यां भ्यस् इति पञ्चमी ॥ ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥ [5]**ङ्याप्प्रातिपदिकात्** ४-१-१ **प्रत्ययः** ३-१-१ **परश्च** ३-१-२ इत्यधिकृत्य ॥ ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययास्स्युः ॥ **सुपः** १-४-१०३ सुप-

---

1 अर्थवदिति किम्? धनम् वनम् इत्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञा मा भूत् ॥ सत्यां हि प्रातिपदिकसंज्ञायां तत्र प्रतिवर्णं सुबुत्पत्तिस्स्यात् ॥ 2 अधातुरिति किम्? हनधातोर्लङि प्रथमपुरुषैकवचने अहन्नित्यत्र 'नलोपः प्रातिपदिकान्तस्ये'त्यनेन नकारलोपस्स्यात् ॥ 3 अप्रत्यय इत्यावर्त्यते ॥ प्रत्ययभिन्नं प्रत्ययान्तभिन्नं चेत्यर्थो विवक्षितः ॥ 4 प्रथमाया एकवचनद्विवचनबहुवचनद्योतकाः प्रत्यया इत्यर्थः ॥ एवं द्वितीयादीनामपि ॥ 5 ङीच आप् च प्रातिपदिकञ्चेत्येतेषां समाहारद्वंद्वः ॥ ङीशब्देन ङीप् ङीष् ङीन् इत्येतेषां सामान्येन ग्रहणम् ॥ आप्शब्देन च टाप् डाप् चाप् इत्येतेषां सामान्येन ग्रहणम् 'यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् ॥' (प्रत्ययग्रहणे यस्मात्सविहितः तदादेः तदन्तस्य च ग्रहणम्॥) इति परिभाषया तदन्तग्रहणम् ॥

त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ **द्व्येकयोर्द्विवचनैकवचने १-४-२२** [1]द्वित्वैकत्वयोरेते स्तः ॥ **विरामोऽवसानम् १-४-११०** वर्णानामभावोऽवसानसंज्ञस्स्यात् ॥ रुत्वविसर्गौ । रामः ॥ **सरूपाणामेकशेष एकविभक्तौ १-२-६४** एकविभक्तौ यानि सरूपा [2]ण्येव दृष्टानि तेषामेक एव शिष्यते ॥ **प्रथमयोः पूर्वसवर्णः ६-१-१०२** अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशस्स्यात् । इति प्राप्ते—**नादिचि ६-१-१०४** [3]आदिचि न पूर्वसवर्णदीर्घः ॥ वृद्धिरेचि ॥ रामौ ॥ **बहुषु बहुवचनम् १-४-२१** बहुत्वविवक्षायां बहुवचनं स्यात् ॥ **चुटू १-३-७** प्रत्ययाद्यौ [4]चुटू इतौ स्तः ॥ **विभक्तिश्च १-४-१०४** सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ **न विभक्तौ तुस्माः १-३-४** विभक्तिस्थास्तवर्गसकारमकारा [5]नेतः ॥ इति सस्य नेत्वम् ॥ रामाः ॥ **एकवचनं सम्बुद्धिः २-३-४९** सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ॥ **यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् १-४-१३** यः प्रत्ययो यस्मात् क्रियते [6]तदादिशब्दस्वरूपं तस्मिन्प्रत्यये परेऽ[7]ङ्गं स्यात् ॥ **एङ्ह्रस्वात्सम्बुद्धेः ६-१-६९** एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते स [8]सम्बुद्धेश्चेत् ॥ हे राम, हे रामौ, हे रामाः ॥ एङ्ग्रहणं किम्? हे हरे ॥ हे विष्णो ॥

---

1 द्वित्वे एकत्वे च विवक्षिते ॥ 2 'वृद्धो यू' नेत्यादिसूत्रात् एव इत्यपकृष्यते ॥ तेन जननीपरिच्छेत्तृवाचकयोर्मातृशब्दयोर्नैकशेषः; तृतीयादौ सारूप्येऽपि औजसादौ वैरूप्यात् ॥ 3 अवर्णात् ॥ इच् प्रत्याहारः ॥ 4 चवर्गटवर्गौ ॥ 5 इत्संज्ञकाः न ॥ 6 'भवामि' 'भविष्यामि' इत्यादौ शबादिविकरणविशिष्टस्य भव - भविष्य इत्यादिकस्याङ्गसंज्ञार्थं तदादिग्रहणम् ॥ 7 अङ्गसंज्ञम् ॥ 8 संबुध्यवयवश्चेदित्यर्थः ॥

अत्र नित्यो गुणः ॥ **अमि पूर्वः** ६-१-१०७ अकोऽ[1]म्यचि पूर्वरूपमेकादेशः ॥ रामम्, रामौ ॥ **लशक्वतद्धिते** १-३-८ तद्धितवर्जप्रत्यया़द्या [2]लशकवर्गा इतस्स्युः ॥ **तस्माच्छसो नः पुंसि** ६-१-१०३ पूर्वसवर्णदीर्घात्परो य[3]श्शसस्सकारस्तस्य नस्स्यात्पुंसि ॥ **अट्कुप्वाङ् नुम् व्यवायेऽपि** ८-४-२ [4]अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि [5]रषाभ्यां परस्य नस्य णस्समानपदे ॥ इति प्राप्ते ॥ **पदान्तस्य** ८-४-३७ नस्य णो न ॥ रामान् ॥ **टाङसिङसामिनात्स्याः** ७-१-१२ अदन्ताट्टादीना[6]मिनादयः स्युः ॥ णत्वं ॥ रामेण ॥ **सुपि च** ७-३-१०२ यञादौ सुप्यतोऽङ्गस्य दीर्घः—रामाभ्याम् ॥ **अतो भिस ऐस्** ७-१-९ अनेकाल् शित्सर्वस्य ॥ रामैः ॥ **ङेर्यः** ७-१-१३ अतोऽङ्गात्परस्य [7]ङेर्यादेशः । **स्थानिवदादेशोऽनल्विधौ** १-१-५६ आदेशः स्थानिवत्स्यान्नतु [8]स्थान्यलाश्रयविधौ ॥ इति स्थानिवत्वा 'त्सुपि' चेति दीर्घः ॥

---

1 द्वितीयैकवचनप्रत्ययः योऽम् तस्मिन् विद्यमानो योऽच् तस्मिन् परत इत्यर्थः ॥ 2 लकारः शकारः कवर्गश्च ॥ 3 शस्प्रत्ययावयवः यस्सकारः तस्य नकारस्स्यात् ॥ 4 अट् प्रत्याहारः ॥ 5 'रषाभ्यां नोणस्समानपदे' इति सूत्रमनुवर्तते ॥ समानपदत्वं च निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम् ॥ 6 इन, आत्, स्य-एते आदेशाः ॥ 7 इदं चतुर्थ्यैकवचनं, न तु सप्तम्याः; व्याख्यानात् ॥ 'ङेराम्' इत्यत्र तु सप्तम्या एव 'स्त्रियाम्' इत्यादि निर्देशात् ॥ 8 स्थानिभूतः यः अल् तदाश्रयविधौ कर्तव्ये ॥ एवञ्च—स्थानिभूताल्मात्रधर्मावच्छिन्ननिमित्तककार्ये कर्तव्ये आदेशस्स्थानिवन्न स्यादित्यर्थः ॥ अल्विधावित्यत्र अलाविधिः, अलः (परस्य) विधिः, अल (स्थाने) विधिः, अलि (परतः) विधिः इति ॥ चतुर्धा विग्रहः ॥ एतेषां प्रयोजनान्यन्यत्र ज्ञातव्यानि ॥

[1]रामाय रामाभ्याम् ॥ **बहुवचने झल्येत् ७-३-१०३** झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः ॥ रामेभ्यः ॥ [2]सुपि किम्? पचध्वम् ॥ **वाऽवसाने ८-४-५६** अवसाने झलां चरो वा ॥ रामात्-रामाद्, रामाभ्याम्, रामेभ्यः ॥ रामस्य ॥ **ओसि च ७-३-१०४** अतोऽङ्गस्यैकारः । रामयोः॥ **ह्रस्वनद्यापो नुट् ७-१-५४** ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात् परस्यामो नुडागमः ॥ **नामि ६-४-३** अजन्ताङ्गस्य दीर्घः ॥ रामाणाम् ॥ रामे, रामयोः ॥ एत्वे कृते—**आदेशप्रत्यययोः ८-३-५९** इण्कुभ्यां परस्यापदान्तस्यादेशः - प्रत्ययावयवश्च यस्सः तस्य मूर्धन्यादेशः॥ ईषद्विवृतस्य सस्य तादृशएव षः॥ रामेषु ॥ एवं कृष्णादयोऽप्यदन्ताः ॥ [3]**सर्वादीनि** [4]**सर्वनामानि १-१-२७** सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम—पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्—स्वमज्ञातिधनाख्यायाम्—अन्तरं बहिर्योगोपसंव्यानयोः—त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम् ॥ **जसश्शी ७-१-१७** अदन्तात् सर्वनाम्नो जसश्शी स्यात् ॥ अनेकाल्त्वात्सर्वादेशः ॥ सर्वे ॥ **सर्वनाम्नः स्मै ७-१-१४** अतस्सर्वनाम्नो ङेः स्मै ॥ सर्वस्मै ॥ **ङसि ङ्योः स्मात् स्मिनौ ७-१-१५** अतस्सर्वनाम्न एतयोरेतौ स्तः॥

---

1 रामायेत्यत्र 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषाया न प्रवृत्तिः; 'कष्टायक्रमणे' इत्यादि पाणिनिनिर्देशेन तस्या अनित्यत्वज्ञापनात् ॥ 2 सुपि इत्येतत्पदं किं प्रयोजनकमित्यर्थः ॥ एतादृशस्थलेसर्वत्रैवमेवोह्यं ॥ 3 सर्वः आदिः येषां तानीति तद्गुणसंविज्ञानबहुव्रीहिः ॥ 'अदस्सर्वेषा' मिति लिङ्गात् ॥ अन्यथा सर्वशब्दस्य सर्वनामसंज्ञा न स्यात् ॥ सर्वेषामिति रूपं न सिद्ध्येत ॥ 4 सर्वनामसंज्ञानि स्युः ॥ सर्वेषां नामानीति अन्वर्थसंज्ञा ॥

सर्वस्मात् ॥ **आमि सर्वनाम्नस्सुट् ७-१-५२** अवर्णान्तात् परस्य सर्वनाम्नो विहितस्यामस्सुडागमः ॥ एत्वषत्वे ॥ सर्वेषाम् ॥ सर्वस्मिन् ॥ शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः ॥ उभशब्दो नित्यं द्विवचनान्तः ॥ उभौ २ उभाभ्याम् ३ उभयोः २ ॥ तस्येह पाठो [1]ऽकजर्थः ॥ [2]डतरडतमौ प्रत्ययौ । 'प्रत्ययग्रहणे तदन्तग्रहण'मिति तदन्ता ग्राह्याः ॥ नेम इत्यर्धे ॥ समस्सर्वपर्यायः। तुल्यपर्यायस्तु न; 'यथासंख्यमनुदेशः समाना'मिति ज्ञापकात् ॥ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १-१-३४** एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात् सर्वत्र या प्राप्ता सा जसि वा ॥ पूर्वे, पूर्वाः ॥ असंज्ञायाम् किम् । उत्तराः कुरवः ॥ [3]स्वाभिधेयापेक्षावधिनियमो व्यवस्था ॥ व्यवस्थायां किम् ? दक्षिणा गाथकाः । कुशलाः इत्यर्थः ॥ **स्वमज्ञातिधनाख्यायाम् १-१-३५** ज्ञातिधनान्यवाचिनः [4]स्वशब्दस्य प्राप्ता संज्ञा जसि वा ॥ स्वे स्वाः ॥ आत्मीयाः आत्मान इति वा ॥ ज्ञातिधनवाचिनस्तु स्वाः ॥ ज्ञातयोऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः १-१-३६** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा ॥ अन्तरे अन्तरा वा गृहाः ॥ बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः ॥ परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा ७-१-१६** एभ्यो ङसिङ्योः स्मात्

---

1 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्युक्तः अकच् ॥ 2 'किं यत्तदोर्निर्धारणे' 'द्वयोरेकस्य डतरच्' 'बहूनां जातिपरिप्रश्ने डतमच्' इत्युक्तौ प्रत्ययौ ॥ 3 स्वेषां=पूर्वादिशब्दानां, अभिधेयेन अपेक्ष्यमाणो योऽवधिः, तस्य नियमः इति विग्रहः ॥ 4 आत्मात्मीयवाचिन इत्यर्थः ॥ 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः ॥

स्मिनौ वा स्तः ॥ पूर्वस्मात्—पूर्वात्, पूर्वस्मिन्—पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १-१-३३** एते जस्युक्तसंज्ञा वा स्युः ॥ प्रथमे—प्रथमाः । [1]तयप्प्रत्ययः । द्वितये—द्वितयाः । शेषं रामवत् । नेमे—नेमाः । शेषं सर्ववत् ॥ [2]तीयस्य ङित्सु वा ॥ द्वितीयस्मै—द्वितीयायेत्यादि ॥ एवं तृतीयः ॥ निर्जरः—[3]**जराया जरसन्यतरस्याम् ७-२-१०१** अजादौ विभक्तौ ॥ (प.)* **पदाङ्गाधिकारे तस्य च तदन्तस्य च** (प.)* [4]**निर्दिश्यमानस्यादेशा भवन्ति** 'एकदेशविकृतमनन्यवत्' दिति जरशब्दस्य जरस् ॥ निर्जरसौ, निर्जरस इत्यादि ॥ पक्षे हलादौ च रामवत् ॥ इति अदन्तशब्दाः ॥

## ॥ अथ आदन्तशब्दाः ॥

विश्वपाः ॥ **दीर्घाज्जसि** [5]**च ६-१-१०५** न पूर्वसवर्णः, वृद्धिः ॥ विश्वपौ, विश्वपाः ॥ हे विश्वपाः ॥ विश्वपां, विश्वपौ ॥ [6]**सुडनपुंसकस्य १-१-४३** स्वादिपञ्च वचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ **स्वादिष्वसर्वनामस्थाने १-४-१७** कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ॥ **यचि भम्**

1 'संख्याया अवयवे तयप्' इति विहितः । ततस्तदन्ताः ग्राह्याः ॥ 2 'द्वेस्तीय' इत्युक्तः ॥ 3 जराशब्दस्य जरसादेशो वा स्यात् ॥ 4 षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वं निर्दिश्यमानत्वम् ॥ 5 चकारात् 'नादिचि' इति सूत्रादिचीत्यनुकृष्यते ॥ दीर्घात् जसि इचि च परे न पूर्वसवर्णदीर्घ इत्यर्थः ॥ 6 प्रत्याहारः ॥

१-४-१८ [1]यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसञ्ज्ञं स्यात् ॥ **आकडारादेका संज्ञा** १-४-१ इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया, या पराऽनवकाशा च ॥ **आतो धातोः** ६-४-१४० आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः ॥ 'अलोऽन्त्यस्य' विश्वपः ॥ विश्वपा, विश्वपाभ्यामित्यादि ॥ एवं शङ्खध्मादयः ॥ धातोः किम्? हाहान् ॥ इति आदन्तशब्दाः ॥

## ॥ अथ इदन्तशब्दाः ॥

हरिः, हरी ॥ **जसि च** ७-३-१०९ ह्रस्वान्तस्याङ्गस्य गुणः ॥ हरयः ॥ **ह्रस्वस्य गुणः** ७-३-१०८ सम्बुद्धौ ॥ [2]हे हरे ॥ हरिम्, हरी, हरीन् ॥ **शेषो घ्यसखि** १-४-७ शेष इति स्पष्टार्थम् ॥ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् ॥ **आङो नाऽस्त्रियाम्** ७-३-१२० घेः परस्याङो[3]ना स्यादस्त्रियाम् ॥ आङिति टासंज्ञा ॥ हरिणा । असखीति किम्? सख्या ॥ हरिभ्यां, हरिभिः ॥ **घेर्ङिति** ७-३-१११ घिसंज्ञस्य ङिति सुपि गुणः ॥ हरये ॥ **ङसिङसोश्च** ६-१-११० एङो ङसिङसोरति पूर्वरूपमेकादेशः ॥ हरेः, हर्योः, हरीणाम् ॥ **अच्च घेः** ७-३-११९ इदुद्भ्यामुत्तरस्य ङेरौ [4]घेरच्च ॥ हरौ, हरिषु ॥ एवं कव्यादयः ॥ **अनङ् सौ** ७-१-९३ सख्युरङ्ग-

1 यकारादिषु ॥ 2 'एङ् ह्रस्वात्संबुद्धेः' रिति संबुद्धिलोपः ॥ 3 ना इत्यादेशः ॥ 4 घि संज्ञकस्य अकारादेशः ॥

स्यानङादेशोऽसम्बुद्धौ [1]सौ ॥ ङित्वादंत्यस्य ॥ **अलोऽन्त्यात्पूर्व उपधा १-१-६५** अन्त्यादलः पूर्वो वर्ण उपधासंज्ञस्स्यात् ॥ **सर्वनामस्थाने चासंबुद्धौ ६-४-८** नांतस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने ॥ **अपृक्त एकाल् प्रत्ययः १-२-४१** स्पष्टम् ॥ **हल्ङ्याभ्यो दीर्घात् सुतिस्यपृक्तं हल् ६-१-६८** हलंतात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येत [2]दपृक्तं हल्लुप्यते ॥ [3]**न लोपः प्रातिपदिकांतस्य ८-२-७** प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः ॥ सखा ॥ **सख्युरसम्बुद्धौ ७-१-९२** सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं [4]णिद्वत्स्यात् ॥ **अचोञ्णिति ७-२-११५** अजन्ताङ्गस्य वृद्धिः ञिति णिति च परे ॥ सखायौ सखायः ॥ हे सखे ॥ सखायम्, सखायौ, सखीन् ॥ सख्या ॥ सख्ये ॥ **ख्यत्यात्परस्य ६-१-११२** खितिशब्दाभ्यां खीती शब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसो रत [5]उः ॥ सख्युः (२) **औत् ७-३-११८** इदुद्भ्यां परस्य ङे [6]रौत् । सख्यौ ॥ शेषं हरिवत् ॥ **पतिस्समास एव १-४-८** [7]घिसंज्ञः ॥ पत्या ॥ पत्ये ॥ पत्युः ॥ (२) पत्यौ ॥ शेषं हरिवत् ॥ समासे तु ॥ भूपतिना ॥

---

1 सुप्रत्यये परतः ॥ 2 सु । ति । सि । एतत्प्रत्ययसम्बन्ध्येकवर्णरूपम् ॥ अत्र सि इत्यनेन 'सहचरितासहचरितयोस्सहचरितस्यैव ग्रहणम्' इति परिभाषया तिपा सहचरितस्य सिप एव ग्रहणम्, नतु सिचः ॥ सुतिसीति किम्? अभैत्सीत् । अत्र भिदेर्लुङि तकारात्परस्य सिजवयवस्य सस्य न लोपः॥ 3 लुप्तषष्ठीकं पदं, नकारस्येत्यर्थः ॥ 4 'गोतोणित्' इतिसूत्रात् णित् इत्यनुवर्तते ॥ 5 उकारः स्यात् ॥ 6 औकार आदेशः ॥ 7 'शेषोध्यसखि' इति सूत्रात् घि इत्यनुवर्तते ॥ पतिशब्दस्य समास एव घिसंज्ञेत्यर्थः ॥

भूपतये ॥ हरिवत् । कतिशब्दो नित्यं बहुवचनान्तः ॥ [1]**बहुगण वतुडति संख्या १-१-२३** डति च १-१-२५ डत्यन्ता [2]संख्या [3]षट्संज्ञा स्यात् ॥ [4]**षड्भ्यो लुक् ७-१-२२** जश्शसोः ॥ **प्रत्ययस्य लुक्श्लुलुपः १-१-६१** लुक्श्लु लुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात् तत्तत्संज्ञं स्यात् ॥ **प्रत्ययलोपे प्रत्ययलक्षणम् १-१-६२** प्रत्यये [5]लुप्तेऽपि तदाश्रितं कार्यं स्यात् ॥ इति 'जसि' चेति गुणे प्राप्ते—**न लुमताऽङ्गस्य १-१-६३** [6]लुमताशब्देन लुप्ते तन्निमित्त-मंगकार्यं न स्यात् ॥ कति ॥ कतिभिः ॥ कतिभ्यः ॥ कतीनाम् ॥ कतिषु ॥ युष्मदस्मद् षट् संज्ञकास्त्रिषु [7]सरूपाः ॥ त्रिशब्दो नित्यं बहुवचनान्तः ॥ त्रयः ॥ त्रीन् ॥ त्रिभिः ॥ त्रिभ्यः ॥ **त्रेस्त्रयः ७-१-५३** आमि ॥ त्रयाणाम् ॥ त्रिषु ॥ गौणत्वेऽपि ॥ प्रियत्र-याणाम् ॥ **त्यदादीना[8]मः ७-२-१०२** एषामकारो विभक्तौ ॥ (द्विपर्यंतानामेवेष्टिः) द्वौ (२) द्वाभ्याम् (३) ॥ द्वयोः ॥ (२) ॥ इति इदन्तशब्दाः ॥

---

1 बहुगणशब्दौ संख्यावाचके प्रातिपदिके गृह्येते ॥ डतिरपि 'किमः संख्यापरिमाणे डति च' इति विहितस्तद्धित एव गृह्यते; वतुसाहचर्यात् ॥ 2 संख्यायतेऽनयेति संख्या इत्यन्वर्थसंज्ञा ॥ 3 'ष्णान्तापट्' इतिसूत्रात् षट् इत्यनुवर्तते ॥ 4 षट्संज्ञकेभ्यः परयोर्जश्शसोर्लुक् स्यात् ॥ 5 अदर्शनंगतेऽपि ॥ 6 लुः अस्यास्तीति लुमान्, तेन लुमता ॥ लुक् । श्लु । लुप् एते लुमन्ताः ॥ 7 स्त्रीपुन्नपुंसकलिङ्गेषु समानरूपाः ॥ 8 अकारोऽन्तादेशस्स्यात् ॥

## ॥ अथ ईदन्तशब्दाः ॥

---

पाति लोकमिति पपीः सूर्यः ॥ **दीर्घाज्जसि च ६-१-१०५** दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः ॥ पप्यौ (२) पप्यः हे पपीः ॥ पपीम्, पपीन् ॥ पप्या, पपीभ्याम्, पपीभिः ॥ पप्ये, पपीभ्यः (२) पप्यः, (२), पप्योः (२) ॥ दीर्घत्वान्न नुट् ॥ पप्याम् ॥ ङौ तु सवर्णदीर्घः ॥ पपी, पपीषु ॥ एवं वातप्रम्यादयः ॥ बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥ [1]**यूस्त्र्याख्यौ नदी १-४-३** ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः ॥ **प्रथमलिङ्गग्रहणं च (वा १३०६)** पूर्वं स्त्र्याख्य [2]स्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥ **अम्बार्थनद्योर्ह्रस्वः ७-३-१०७** [3]सम्बुद्धौ ॥ हे बहुश्रेयसि बहुश्रेयसीन् ॥ **आण् नद्याः ७-३-११२** नद्यन्तात्परेषां ङितामाडागमः॥ **आटश्च ६-१-९०** आटोऽचि परे वृद्धिरेकादेशः ॥ बहुश्रेयस्यै ॥ बहुश्रेयस्याः (२), बहुश्रेयसीनाम् ॥ **ङे राम् नद्याम्नीभ्यः ७-३-११६** नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङे [4]राम् ॥ [5]बहुश्रेयस्यां शेषं पपीवत् ॥ अङ्यन्तत्वान्न सुलोपः ॥ अति लक्ष्मीः॥ शेषं बहुश्रेयसीवत् ॥ प्रधीः ॥ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६-४-७७** श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोः भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे ॥ इति प्राप्ते—**एरनेकाचोऽसंयोग-**

---

1 ई च ऊ च यू, इतिविग्रहः ॥ 2 गौणत्वेऽपि, 3 'सम्बुद्धौ' चेत्यतः सम्बुद्धावित्यनुवर्तते ॥ अम्बार्थानां नद्यन्तानां च ह्रस्वस्स्यात् सम्बुद्धौ परे ॥ 4 आम् आदेशः, 5 नुटः परत्वात् आट् ॥

पूर्वस्य ६-४-८२ धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तद
यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये ॥ प्रध्यौ (
प्रध्यम्, प्रध्यः ॥ [1]प्रध्यि ॥ शेषं पपीवत् ॥ एवमुन्नीः ॥ धात
संयोगस्य विशेषणादिह स्यादेव यण् ॥ उन्न्यौ, उन्न्यः
ग्रामणीः ॥ ङौतु–ग्रामण्यां ॥ अनेकाचः किम्? नीः, नि
नियः ॥ अमि शसि च परत्वादियङ् ॥ नियम्, नियः
ङेराम् ॥ नियाम् ॥ असंयोगपूर्वस्य किम्? सुश्रिया, यवक्रिया
गतिश्च १-४-६० प्रादयः क्रियायोगे [2]गतिसंज्ञास्स्युः ॥ *गतिका
केतरपूर्वपदस्य यण् नेष्यते (वा…) शुद्धधियौ ॥ न भूसुधिय
६-४-८५ एतयो [3]रचि सुपि यण् न सुधियौ, सुधियः इत्यादि
सुखमिच्छतीति सुखीः–[4]सुतीः ॥ सुख्यौ (२)–सुत्यौ (२)–सुख
(२), सुत्युः (२) शेषं प्रधीवत् ॥ इति ईदन्तशब्दाः ॥

## ॥ अथ उदन्तशब्दाः ॥

शम्भुर्हरिवत् ॥ एवं विष्णुवायुभान्वादयः ॥ तृज
क्रोष्टुः ७-१-९५ [5]असम्बुद्धौ सर्वनामस्थाने ॥ क्रोष्टुशब्दस्य स्थ
क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ॥ ऋतो ङि सर्वनामस्थानर
७-३-११० ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च ॥ इति प्राप्ते-

1 प्रकृष्टं ध्यायतीति विग्रहे नित्यस्त्रीत्वविरहात् ङेराम् न भवति ॥ 2 सूत्रे
कारात् प्रादयः गतिसंज्ञा उपसर्गसंज्ञाश्च स्युरित्यर्थः ॥ 3 अजादौ सुपि प
4 सुतमिच्छतीति सुतीः ॥ 5 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनुवर्तते ॥

ऋदुशनस्पुरुदंसोऽनेहसां च ७-१-९४ ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ ॥ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृ-ोतृप्रशास्तृणाम् ६-४-११ अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्व-ामस्थाने ॥ क्रोष्टा, क्रोष्टारौ (२) क्रोष्टारः ॥ क्रोष्टून् ॥ विभाषा ृतीयादिष्वचि ७-१-९७ अजादिषु क्रोष्टुर्वा तृज्वत् ॥ क्रोष्ट्रा ॥ ोष्ट्रे ॥ ऋत उत् ६-१-१११ ऋतो ङसिङसोरत [2]उदेकादेशः ॥ परः ॥ रात्सस्य ८-२-२४ रेफात्संयोगान्तस्य सस्यैव लोपो ान्यस्य ॥ रस्य विसर्गः ॥ क्रोष्टुः (२) क्रोष्टोः (२) *नुमचि-तृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन (वा ४३२४) क्रोष्टूनाम् ॥ ोष्टरि । पक्षे हलादौ च शम्भुवत् ॥ इति उदन्तशब्दाः ॥

---

## ॥ अथ ऊदन्तशब्दाः ॥

---

हूहूः, हूह्वौ (२) हूहूम्, हूहून् । इत्यादि ॥ अतिचमूशब्दे तु ादीकार्यं विशेषः हे अतिचमु । अतिचम्वै । अतिचम्वाः (२) ातिचमूनाम् ॥ खलपूः ॥ ओस्सुपि ६-४-८३ धात्ववयवसंयोगपूर्वो ा भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् यादचि सुपि ॥ खलप्वा, खलप्वः ॥ एवं सुल्वादयः ॥ स्वभूः, वभुवौ, स्वभुवः ॥ वर्षाभूः ॥ वर्षाभ्वश्च ६-४-८४ अस्य यण् स्या-चि सुपि ॥ वर्षाभ्वावित्यादि ॥ दृन्भूः ॥ *दृन्करपुनः पूर्वस्य

---

1 'अनङ्सौ' इत्यनुवर्तते ॥ 2 उकारः ॥

**भुवो यण् वक्तव्यः** (वा ४११८) हन्भ्वौ ॥ एवं करभूः ॥ इति ऊदन्तशब्दाः ॥

---

## ॥ अथ ऋदन्तशब्दाः ॥

---

धाता, हे धातः, धातारौ, धातारः ॥ ***ऋवर्णान्नस्य णत्वं वाच्यम्** (वा ४९३९) धातॄणां ॥ एवं नप्त्रादयः ॥ [1]नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् ॥ उणादिव्युत्पन्नानां तृन् तृजन्तानां चेन्नप्त्रादीनामेव ॥ तेनेह न ॥ पिता, पितरौ, पितरः ॥ पितरम् ॥ शेषं धातृवत् ॥ एवं जामात्रादयः ॥ ना, नरौ ॥ **नृ च** ६-४-६ अस्य नामि वा दीर्घः ॥ नृणाम्—नॄणाम् ॥ इति ऋदन्तशब्दाः ॥

---

## ॥ अथ ओदन्तशब्दाः ॥

---

**गोतो णित्** ७-१-९० ***ओतो णिदिति इति वाच्यम्** (वा ५०३५) ओकारांताद्विहितं सर्वनामस्थानं [2]णिद्वत् ॥ गौः, गावौ, गावः ॥ **औतोऽम्शशोः** ६-१-९३ आ ओत इतिच्छेदः ॥ ओतोऽम्शसोरच्याकार एकादेशः ॥ गाम्, गावौ, गाः ॥ गवा ॥ गवे ॥ गोः इत्यादि ॥ इति ओदन्तशब्दाः ॥

---

1 नप्त्रादीनामेवेति नियमेऽपि उद्गातृशब्दस्य भवत्येव; 'समर्थः पदविधिः' इति सूत्रे 'उद्गातारः' इति भाष्यप्रयोगात् ॥ 2 वस्तुतस्तु भाष्यमते उणादिघटकतृप्रत्यये सानुबन्धकत्वाभावात् नियमवर्णनमिदमसङ्गतमेव ॥

## ॥ अथ ऐदन्तशब्दाः ॥

[1]रायो हलि ७-२-८५ अस्याकारादेशो हलि विभक्तौ ॥ राः, रायौ, रायः ॥ राभ्यामित्यादि ॥ इति ऐदन्तशब्दाः ॥

---

## ॥ अथ औदन्तशब्दाः ॥

---

ग्लौः, ग्लावौ, ग्लावः ॥ ग्लौभ्यामित्यादि ॥ इति औदन्तशब्दाः ॥

॥ इत्यजन्तपुंलिङ्गप्रकरणम् ॥

---

1 रैशब्दस्य ॥

## ॥ अजन्तस्त्रीलिङ्गप्रकरणम् ॥

रमा ॥ **औङ आपः ७-१-१८** आबन्तादङ्गात् परस्यौङश्शी स्यात् ॥ औङित्यौकारविभक्तेस्संज्ञा ॥ रमे, रमाः ॥ **सम्बुद्धौ च ७-३-१०६** आप एकारस्स्यात्सम्बुद्धौ ॥ 'एङ् ह्रस्वा' दिति सम्बुद्धिलोपः ॥ हे रमे, हे रमे, हे रमाः ॥ रमाम्, रमे, रमाः ॥ **आङि चापः ७-३-१०५** आङ्योसि चाप एकारः ॥ रमया; रमाभ्याम्, रमाभिः ॥ **याडापः ७-३-११३** आपो [1]ङितो याट् ॥ वृद्धिः ॥ रमायै, रमाभ्यः ॥ रमायाः, रमयोः, रमाणाम् ॥ रमायाम्, रमासु ॥ एवं दुर्गाम्बिकादयः ॥ **सर्वनाम्नस्स्याड्ढ्रस्वश्च ७-३-११४** आबन्तात्सर्वनाम्नो ङितस्स्याडापश्च ह्रस्वः ॥ सर्वस्यै, सर्वस्याः (२) सर्वासाम् ॥ सर्वस्याम् ॥ शेषं रमावत् ॥ एवं विश्वादयः आबन्ताः ॥ **विभाषा दिक्समासे बहुव्रीहौ १-१-२८** सर्वनामता वा ॥ उत्तरपूर्वस्यै, उत्तरपूर्वायै ॥ '[2]तीय'स्येति वा संज्ञा ॥ द्वितीयस्यै - द्वितीयायै ॥ एवं तृतीया ॥ 'अम्बा'र्थेति ह्रस्वः ॥ हे अम्ब ॥ हे अक्क ॥ हे अल्ल ॥ जरा, जरसौ, जरे इत्यादि ॥ पक्षे रमावत् ॥ गोपा विश्वपावत् ॥ मतिः ॥ मतीः ॥ मत्या ॥ **ङिति ह्रस्वश्च १-४-६** इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति ॥ मत्यै, मतये ॥ मत्याः

---

1 ङकारेत्कानां ङे, ङस्, ङस्, ङि, एतेषामित्यर्थः ॥ 2 विभाषा प्रकरणे 'तीयस्य ङित्सूपसंख्यानम्' इति वार्तिकात् ॥

(२)—मतेः (२) नदीत्वे ङेरौत्वे प्राप्ते—**इदुद्भ्याम् ७-३-११७** नदीसंज्ञकाभ्यां परस्य ङेराम् ॥ मत्याम् ॥ पक्षे 'अच्च घेः' मतौ ॥ शेषं हरिवत् ॥ एवं बुद्ध्यादयः ॥ **त्रिचतुरोः स्त्रियां तिसृचतसृ ७-२-९९** स्त्रीलिङ्गयोरेतौ स्तो [1]विभक्तौ ॥ **अचि र ऋतः ७-२-१००** तिसृचतसृ एतयोः ऋकारस्य रेफादेशस्स्यादचि ॥ गुणदीर्घोत्वानामपवादः ॥ तिस्रः (२) तिसृभिः ॥ तिसृभ्यः (२) आमि नुट् ॥ **न [2]तिसृचतसृ ६-४-४** एतयोर्नामि दीर्घो न ॥ तिसृणाम् ॥ तिसृषु ॥ त्यदाद्यत्वे टाप् ॥ द्वे (२) द्वाभ्याम् (३) द्वयोः (२) गौरी, गौर्यौ, गौर्यः ॥ हे गौरि ॥ गौर्यै ॥ इत्यादि ॥ एवं नद्यादयः ॥ लक्ष्मीः ॥ शेषं गौरीवत् ॥ एवं तरी-तन्त्र्यादयः ॥ स्त्री ॥ हे स्त्रि ॥ **स्त्रियाः ६-४-७९** अस्येयङजादौ प्रत्यये परे ॥ स्त्रियौ (२) स्त्रियः ॥ **वाऽम्शसोः ६-४-८०** स्त्रियाः इयङ् ॥ स्त्रियम्—स्त्रीम् ॥ स्त्रियः—स्त्रीः ॥ स्त्रिया ॥ स्त्रियै ॥ स्त्रियाः (२) परत्वान्नुट् ॥ स्त्रीणाम् ॥ स्त्रीषु ॥ श्रीः, श्रियौ, श्रियः ॥ **नेयङुवङ्स्थानावस्त्री १-४-४** इयङुवङोः स्थितिर्ययोस्ता [3]वीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री ॥ हे श्रीः ॥ श्रियै—श्रिये ॥ श्रियाः (२)-श्रियः (२) **वामि १-४-५** इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः, न तु स्त्री ॥ श्रीणाम्—श्रियाम् ॥ श्रियि—श्रियाम् ॥ धेनुर्मतिवत् ॥ **स्त्रियां च ७-१-९६** स्त्रीवाची क्रोष्टुशब्दस्तृजन्तव-

---

1 'अष्टन आविभक्तौ' विति सूत्रात् विभक्तौ इत्यनुवर्तते ॥ 2 तिसृ चतसृ इति लुप्तषष्ठीके पदे ॥ 3 ईदूदन्तौ ॥

द्रूपं लभते ॥ **ऋन्नेभ्यो ङीप् ४-१-५** ऋदन्तेभ्यो नान्तेभ्य स्त्रियां ङीप् ॥ क्रोष्ट्री गौरीवत् ॥ भ्रूः श्रीवत् ॥ स्वयम्भूः पुंवत् न [1]**षट् स्वस्रादिभ्यः ४-१-१०** ङीप्टापौ न ॥

स्वसा तिस्रश्चतस्रश्च ननांदा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

'अप्तृ'न्निति दीर्घः ॥ स्वसा, स्वसारौ ॥ माता पितृवत् ॥ शसि मातॄः, द्यौर्गोवत् ॥ राः पुंवत् ॥ नौः ग्लौवत् ॥

॥ इति अजन्तस्त्रीलिङ्गप्रकरणम् ॥

---

1 षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ॥

## ॥ अथ अजन्तनपुंसकलिङ्गप्रकरणम् ॥

**अतोऽम् ७-१-२४** अतोऽङ्गात् क्लीबात् [1]स्वमोरम् ॥ ज्ञानम् ॥ 'एङ् ह्रस्वादिति हल्लोपः ॥ हे ज्ञान ॥ **नपुंसकाच्च ७-१-१९** क्लीबादौङश्शी भसंज्ञायाम्—**यस्येति च ६-४-१४८** ईकारे तद्धिते च भस्येवर्णावर्णयोर्लोपः । इत्यलोपे प्राप्ते—*[*]**औङश्श्यां प्रतिषेधो वाच्यः (वा ४१८९)** ज्ञाने ॥ **जश्शसोश्शिः ७-१-२०** क्लीबात् ॥ **शि सर्वनामस्थानम् १-१-४२ नपुंसकस्य झलचः ७-१-७२** झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात्सर्वनामस्थाने ॥ **मिदचोऽन्त्यात्परः १-१-४७** अचां मध्ये योऽन्त्यस्तस्मात् परस्तस्यै वान्तावयवो [2]मित् स्यात् ॥ उपधादीर्घः ॥ ज्ञानानि ॥ पुनस्तद्वत् ॥ शेषं रामवत् ॥ एवं धन वन फलादयः ॥ **अद्ड्डुतरादिभ्यः पञ्चभ्यः ७-१-२५** एभ्यः क्लीबेभ्यः स्वमोरद्ड् डादेशस्स्यात् ॥ **टेः ६-४-१४३** [3]डिति भस्य टेर्लोपः ॥ 'वाऽवसाने' कतरत्—कतरद्, कतरे, कतराणि॥ हे कतरत् ॥ शेषं पुंवत् ॥ एवं कतमत्, इतरत्, अन्यत्, अन्यतरत् ॥ अन्यतमस्य त्वन्यतममित्येव ॥ *[*]**एकतरात्प्रतिषेधो वक्तव्यः (वा ४२८७)** एकतरम् ॥ **ह्रस्वो नपुंसके प्रातिपदिकस्य १-२-४७** [4]अजन्तस्येत्येव ॥ श्रीपं ॥ ज्ञानवत् ॥ **स्वमोर्नपुंसकात् ७-१-२३** [5]लुक् स्यात् ॥ वारि ॥ **इकोऽचि विभक्तौ ७-१-७३**

---

1 सुप्रत्ययस्य अम् प्रत्ययस्य च ॥ अमः अम् विधानम् 'स्वमोर्नपुंसका'दिति प्राप्तस्य लुको बाधनार्थं ॥ 2 मित् संज्ञिक आगम इत्यर्थः ॥ 3 डितिपरे ॥ 4 क्लीबे अजन्तस्य प्रातिपदिकस्य ह्रस्वस्स्यात् इत्यर्थः ॥ 5 'षड्भ्योलुक्' इत्यतः लुगित्यनुवर्तते ॥

इगन्तस्य क्लीवस्य [1]नुमचि विभक्तौ ॥ वारिणी, वारीणि ॥ 'नलुमते' त्यस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः ॥ हे वारे–हे वारि, 'आङोना...' वारिणौ ॥ 'घेर्ङिति' इति गुणे प्राप्ते ॥ *वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन (वा ४३७३) वारिणे ॥ वारिणः (२) वारिणोः (२) 'नुमचिर...' इति नुट् ॥ वारीणां ॥ वारिणि ॥ हलादौ हरिवत् ॥ **अस्थिदधिसक्थ्यक्ष्णा [2]मन ङुदात्तः ७-१-७५** टादावचि ॥ **भस्य ६-४-१२९** इत्यधिकृत्य ॥ **अल्लोपोऽनः ६-४-१३४** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः ॥ दध्ना ॥ दध्ने ॥ दध्नः (२) दध्नोः (२) दध्नाम् ॥ **विभाषाङिश्योः ६-४-१३६** अङ्गावयवोऽसर्वनामस्थानपरो योऽन् तस्याकारस्य लोपो वा स्या [3]न्ङिश्योः परयोः ॥ दध्नि–दधनि ॥ शेषं वारिवत् ॥ एवमस्थि, सक्थि, अक्षि, सुधि, सुधिनी, सुधीनि ॥ हेसुधे–हेसुधि ॥ सुधिया–सुधिनेत्यादि ॥ मधु, मधुनी, मधूनि ॥ हेमधो–हेमधु ॥ सुलुनी, सुलूनि ॥ सुल्वा–सुलुनेत्यादि, धातृ, धातृणी, धातॄणि ॥ हेधातृ–हेधातः ॥ एवं ज्ञात्रादयः ॥ **एच इग्घ्रस्वादेशे १-१-४८** आदिश्यमानेषु ह्रस्वेषु मध्ये एचः इगेव स्यात् ॥ प्रद्यु, प्रद्युनी, प्रद्यूनि ॥ प्रद्युनेत्यादि ॥ प्ररि, प्ररिणी, प्ररीणि ॥ प्ररिणा, (प.) एकदेशविकृतमनन्यवत् ॥ प्रराभ्याम् ॥ प्ररीणाम् ॥ सुनु, सुनुनी, सुनूनि ॥ सुनुनेत्यादि ॥

॥ इत्यजन्तनपुंसकलिङ्गप्रकरणम् ॥

---

1 नुमागमस्स्यात् ॥ 2 अनङादेशः स च उदात्तः ॥ 3 ङिप्रत्यये शिप्रत्यये च ॥

## ॥ अथ हलन्तपुंलिङ्गप्रकरणम् ॥

---

**हो ढः ८-२-३१** झलि पदान्ते च लिट्-लिड्, लिहौ, लिहः ॥ लिड्भ्यां ॥ लिट्सु-लिट्त्सु ॥ **दादेर्धातोर्घः ८-२-३२** झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः ॥ **एकाचो बशो भष् झषन्तस्य स्ध्वोः ८-२-३७** धात्ववयवस्यैकाचो [1]झषन्तस्य बशो भष्सेध्वे पदान्ते च ॥ धुक्-धुग्, दुहौ, दुहः ॥ धुग्भ्याम्, धुक्षु ॥ **वा द्रुहमुहष्णुहष्णिहाम् ८-२-३३** एषां हस्य वा घो झलि पदान्ते च ॥ ध्रुक्-ध्रुग्, ध्रुट्-ध्रुड्, द्रुहौ, द्रुहः, ध्रुग्भ्याम् - ध्रुड्भ्याम् ॥ ध्रुक्षु - ध्रुट्सु-ध्रुट्त्सु ॥ एवं मुहादयः ॥ **धात्वादेष्षस्सः ६-१-६४** स्नुट्, स्नुड्, स्नुक्-स्नुग् ॥ एवं स्निह् ॥ [2]**इग्यणस्सम्प्रसारणम् १-१-४५ वाह ऊठ् ६-४-१३२** भस्य वाहस्सम्प्रसारणमूठ् ॥ **सम्प्रसारणाच्च ६-१-१०८** सम्प्रसारणादचि पूर्वरूपमेकादेशः ॥ वृद्धिः ॥ विश्वौहः॥ इत्यादि ॥ **चतुरनडुहोरामुदात्तः ७-१-९८** सर्वनामस्थाने स चोदात्तः ॥ **सावनडुहः ७-१-८२** सावस्य नुम् ॥ आमोऽपवादः । अनड्वान् ॥ [3]**अम् सम्बुद्धौ ७-१-९९** आदिति वर्तते ॥ तेन नुमामोरम्नुमोश्च परस्परं समावेशः ॥ हे अनड्वन्, अनड्वाहौ (२), अनडुहः ॥ **वसुस्रंसुध्वंस्वनडुहां दः ८-२-७२** सान्तस्य वस्वन्तस्य स्रंस्वादेश्च दस्स्यात्पदान्ते ॥ अनडुद्भ्यामित्यादि ॥ सान्तेति किम्? विद्वान् ॥ पदान्तेति किम्? स्रस्तम्, ध्वस्तम् ॥

---

1 झषन्तावयवस्य बशस्स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च ॥ 2 यणः स्थाने प्रयुज्यमानः इक् सम्प्रसारणसंज्ञस्स्यात् ॥ 3 चतुरनडुहोरम् स्यात्सम्बुद्धौ ॥

**सहेस्साडस्सः** ८-३-५६ साड्रूपस्य सहेस्सस्य मूर्धन्यादेशः ॥ तुराषाट्-तुराषाड्, तुरासाहौ, तुरासाहः ॥ तुराषाड्भ्यामित्यादि ॥ **दिव औत्** ७-१-८४ दिविति प्रातिपदिकस्यौत्स्यात्सौ ॥ सुद्यौः, सुदिवौ ॥ **दिव उत्** ६-१-१३१ पदान्ते ॥ सुद्युभ्यामित्यादि ॥ चत्वारः ॥ चतुरः ॥ चतुर्भिः ॥ चतुर्भ्यः ॥ [1]**षट्चतुर्भ्यश्च** ७-१-५५ एभ्य आमो नुडागमः ॥ [2]**रषाभ्यां नो णस्समानपदे** ८-४-१ **अचो रहाभ्यां द्वे** ८-४-४६ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः ॥ चतुर्णाम् ॥ **रोस्सुपि** ८-३-१६ रोरेव विसर्ग[3]स्सुपि ॥ षत्वम् ॥ षस्य द्वित्वे प्राप्ते— **शरोऽचि** ८-४-४९ अचि परे [4]शरो न द्वे स्तः ॥ चतुर्षु ॥ **मो नो धातोः** ८-२-६४ [5]पदान्ते ॥ प्रशान् ॥ प्रशान्भ्यामित्यादि ॥ **किमः कः** ७-२-१०३ [6]विभक्तौ ॥ कः, कौ, के ॥ इत्यादिः ॥ सर्ववत् ॥ **इदमो मः** ७-२-१०८ [7]सौ ॥ त्यदाद्यत्वापवादः ॥ **इदोऽय् पुंसि** ७-२-१११ इदम [8]इदोऽय्सौ पुंसि ॥ अयम् ॥ त्यदाद्यत्वे ॥ **अतो गुणे** ६-१-९७ अपदान्तादतो गुणे पररूपमेकादेशः ॥ **दश्च** ७-२-१०९ इदमो दस्य मस्स्याद्विभक्तौ ॥ इमौ, इमे ॥ त्यदादेस्सम्बोधनं नास्ती[9]त्युत्सर्गः ॥ **अनाप्यकः** ७-२-

1 षट्संज्ञकेभ्यः चतुर्भ्यश्च ॥ 2 रेफषकाराभ्यां परस्य नकारस्य णकारस्स्यात् एकपदे ॥ 3 सप्तमी बहुवचने ॥ 4 प्रत्याहारः ॥ 5 धातोर्मस्य नः स्यात् पदान्ते ॥ 6 'अष्टनआविभक्तौ' इति सूत्रात् विभक्तावित्यनुवर्तते, किंशब्दस्य कशब्द आदेशः विभक्तौ परे इत्यर्थः ॥ 7 'तदोस्ससौ' इत्यतः सावित्यनुवर्तते, इदमोमस्स्यात्सौ परे ॥ 8 इदः स्थाने ॥ 9 उत्सर्गो नाम प्रायो वादः; 'हे सः!' इति भाष्यकारवचनात् ॥

११२ अककारस्येदम इदोऽनापि विभक्तौ ॥ [1]आबिति प्रत्याहारः अनेन ॥ **हलि लोपः ७-२-११३** अककारस्येदम इदो लोपः अपि हलादौ ॥ (प) **नानर्थकेऽलोंत्यविधिरनभ्यासविकारे** ॥ **आद्यन्तवदेकस्मिन् १-१-२१** एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात् ॥ 'सुपि चे'ति दीर्घः ॥ आभ्याम् ॥ **नेदमदसोरकोः ७-१-११** अककारयोरिदमदसोर्भिस ऐस् न ॥ एत्वम् ॥ एभिः ॥ अस्मै, एभ्यः (२) अस्मात् । अस्य, अनयोः ॥ (२) एषाम् ॥ अस्मिन् ॥ एषु ॥ **द्वितीयाटौस्स्वेनः २-४-३४** इदमेतदोरन्वादेशे ॥ किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः यथा—अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलमेनयोः प्रभूतं धनमिति ॥ एनं, एनौ, एनान् ॥ एनेन ॥ एनयोः (२) दीर्घसुलोपनलोपेषु ॥ राजा ॥ **न ङिसम्बुद्ध्योः ८-२-८** नस्य लोपो न ङौ सम्बुद्धौ च ॥ हे राजन् । [2]**ङावुत्तरपदे प्रतिषेधो वक्तव्यः** (वा-४७८५) ब्रह्मनिष्ठः ॥ राजानौ (२) राजानः ॥ अल्लोपे श्चुत्वम् ॥ राज्ञः **नलोपस्सुप् स्वरसंज्ञातुग्विधिषु कृति ८-२-२** सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च न लोपोऽसिद्धो नान्यत्र ॥ राजाश्वः ॥ इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न ॥ राजभ्याम् ॥ राज्ञि—राजनीत्यादि ॥ यज्वा, यज्वानौ । यज्वानः ॥ **न संयोगाद्वमन्तात्**

---

1 आबिति टाप्रत्ययाकारादारभ्य सुपः पकारेण प्रत्याहारः ॥ 2 ङौ विषये उत्तरपदे परे 'नङिसम्बुद्ध्योः' इत्यस्य निषेधो वाच्य इत्यर्थः ॥

६-४-१३७ वकारमकारान्तसंयोगादनोऽकारस्य लोपो न, यज्वनः ॥ यज्वना, यज्वभ्याम् ॥ ब्रह्मणः, ब्रह्मणा, ब्रह्मभ्यामित्यादि ॥ **इन् हन् पूषार्यम्णां** [1]**शौ** ६-४-१२ एषां शावेवोपधाया दीर्घो नान्यत्र ॥ इति निषेधे प्राप्ते—**सौ च** ६-४-१३ इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ, वृत्रहा, हे वृत्रहन् ॥ [2]**एकाजुत्तरपदे णः** ८-४-१२ एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्था[3]न्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः ॥ वृत्रहणौ (२) वृत्रहणः ॥ वृत्रहणम् ॥ **हो हन्तेर्ञ्णिन्नेषु** ७-३-५४ ञ्णिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम् ॥ वृत्रघ्नः इत्यादि ॥ एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन् ॥ **मघवा बहुलम्** ६-४-१२८ मघवन् शब्दस्य वा तृ इत्यन्तादेशः ऋ इत् ॥ **उगिदचां सर्वनामस्थानेऽधातोः** ७-१-७० अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात् सर्वनामस्थाने परे ॥ बहुलग्रहणाद्दीर्घे संयोगान्तलोपो नासिद्धः ॥ मघवान्, मघवन्तौ, मघवन्तः ॥ हे मघवन् ॥ मघवद्भ्याम्, तृत्वाभावे, मघवा ॥ सुटि राजवत् ॥ **श्वयुवमघोना-**

---

1 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेनैव सिद्धे शिग्रहणं दीर्घेशावेवेति नियमार्थम् ॥ 2 समासचरमावयवे रूढेन उत्तरपदशब्देन समास इति लभ्यते, एकः अच् यस्मिन् तत् एकाच्, तत् उत्तरपदं यस्य सः एकाजुत्तरपदः, तस्मिन् समासे इति बहुव्रीहिगर्भो बहुव्रीहिः, रषाभ्यां नोणः इति 'पूर्वपदात्संज्ञायामगः' इत्यतः पूर्वपदादिति च अनुवर्तते पूर्वं पदं यस्य तत् पूर्वपदम्, एकत्वमविवक्षितम्, पूर्वपदस्थाभ्यामिति लभ्यते 'प्रातिपदिकान्तनुम्विभक्तिषु' च इत्यनुवर्तते ॥ विद्यमानस्येति शेषः ॥ तदाह—एकाजित्यादि ॥ 3 रेफात् षकाराच्चेत्यर्थः ॥

**मताद्धिते** ६-४-१३३ अन्नन्तानां भसंज्ञानामेषामतद्धिते सम्प्रसारणम् ॥ मघोनः । मघवभ्याम् ॥ एवं श्वन् । युवन् ॥ **न सम्प्रसारणे सम्प्रसारणम्** ६-१-३७ पूर्वस्य यणः, यूनः, यूना, युवभ्यामित्यादि, अर्वा ॥ हे अर्वन् ॥ **अर्वणस्त्रसावनञः** ६-४-१२७ नञा रहितस्यार्वन्नन्तस्यांगस्य तृ इत्यन्तादेशो न तु सौ ॥ नुम् ॥ अर्वन्तौ, अर्वन्तः ॥ अर्वन्भ्या मित्यादि ॥ **पथिमथ्यृभुक्षामात्** ७-१-८५ सौ ॥ **इतोऽत्सर्वनामस्थाने** ७-१-८६ [1]पथ्यादेः ॥ **थो न्थः** ७-१-८७ पथिमथोस्थस्य न्थादेशस्सर्वनामस्थाने ॥ पन्थाः, पन्थानौ (२)पन्थानः ॥ पन्थानम् ॥ **भस्य टेर्लोपः** ७-१-८८ भस्य पथ्यादेष्टिलोपः ॥ पथः ॥ पथा, पथिभ्याम् ॥ एवं मथिन्, ऋभुक्षिन् ॥ **ष्णान्ता षट्** १-१-२४ पान्ता नान्ता च सङ्ख्या षट्संज्ञा स्यात् ॥ [2]पञ्चन् शब्दो नित्यं बहुवचनान्तः ॥ पञ्च, पञ्च, पञ्चभिः॥ पञ्चभ्यः (२) षट्त्वा न्नुट् ॥ **नोपधायाः** ६-४-७ नान्तस्योपधाया दीर्घो नामि पञ्चानाम्॥ पञ्चसु ॥ **अष्टन आ विभक्तौ** ७-२-८४ हलादौ वा स्यात् ॥ अत एवाष्टनो दीर्घादिति दीर्घग्रहणं सार्थकम् ॥ **अष्टाभ्य औश्** ७-१-२१ कृताकारादष्टनो जश्शसोरौश् ॥ अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति ॥ अष्टौ (२) अष्टाभ्यः (२) अष्टानाम् ॥ अष्टासु ॥ आत्वाभावे अष्ट (२) पञ्चवत् ॥ **ऋत्विग्दधृक् स्रग्दिगुष्णिगञ्चुयुजि क्रुञ्चां**

---

1 पथिमथ्यृभुक्षाम् इकारस्य अकारस्स्यात् सर्वनामस्थाने परे 2 अनुपसर्जनत्वे एव ॥ गौणत्वे तु प्रियपञ्चा प्रियपञ्चानौ इत्याद्येकवचनद्विवचनेस्तएव ॥

च ३-२-५९ एभ्यः क्विन् अञ्चेस्सुप्युपपदे ॥ युजिक्रुञ्चयोः केवलयोः क्रुञ्चेर्नलोपाभावश्च निपात्यते ॥ कनावितौ ॥ **कृदतिङ् ३-१-९३** अत्र [1]धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञस्स्यात् ॥ **वेरपृक्तस्य ६-१-६७** [2]लोपः ॥ **क्विन्प्रत्ययस्य कुः ८-२-६२** क्विन्प्रत्ययो यस्मात् तस्य कवर्गोऽन्तादेशः पदान्ते ॥ अस्य असिद्धत्वा 'च्चोः कु' रिति कुत्वम् ॥ ऋत्विक् - ऋत्विग्, ऋत्विजौ ॥ ऋत्विग्भ्याम् ॥ **युजेरसमासे ७-१-७१** युजे[3]स्सर्वनामस्थाने नुम् स्यादसमासे सुलोपः ॥ संयोगान्तलोपः ॥ कुत्वेन नस्य ङः ॥ युङ्, युञ्जौ (२) युञ्जः, युजः ॥ युग्भ्याम् ॥ **चोः कुः ८-२-३०** चवर्गस्य कवर्गस्याज्झलि पदान्ते च ॥ सुयुक्–सुयुग् ॥ सुयुजा, सुयुग्भ्याम्, खन्, खञ्जौ ॥ खन्भ्याम् ॥ **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८-२-३६** [4]झलि पदान्ते च जश्त्वचर्त्वे ॥ राट्-राड्, राजौ (२), राजः ॥ राड्भ्याम् (३) एवं विभ्राट्, देवेट्, विश्वसृट् ॥ **परौ व्रजेष्षः पदान्ते** (उणा २१७) परा वुपपदे व्रजेः क्विन् स्याद्दीर्घश्च पदान्ते षत्वमपि ॥ परिव्राट्, परिव्राजौ ॥ **विश्वस्य वसुराटोः ६-३-१२८** दीर्घः ॥ विश्वाराट् - विश्वाराड् [5]विश्वराजौ ॥ विश्वाराड्भ्याम् ॥ **स्कोस्संयोगाद्योरन्ते च ८-२-२९**

---

1 'धातोः' इति सूत्रमनुवर्तते 2 'लोपोव्योर्वलि' इत्यतः लोप इत्यनुवर्तते ॥ अपृक्तस्य वकारस्य लोपः ॥ 3 उगिदचां सर्वनामस्थाने, इत्यतः सर्वनामस्थाने ' इति, 'इदितोनुम् धातोः' इत्यतः नुम् इति चानुवर्तते ॥ 4 व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशस्स्यात् ॥ 5 'ढ्लोपे...' इत्यतः दीर्घ इत्यनुवर्तते, विश्वशब्दस्य दीर्घअन्तादेशस्स्यात् वसुशब्दे राट् शब्दे च परतः, अपदान्तत्वान्न दीर्घ इति भावः ॥

पदान्ते झलि च यस्संयोगस्तदाद्योः [1]स्कोर्लोपः ॥ भृट् सस्य श्चुत्वेन शः ॥ 'झलां जश् झ' शीति शस्य जः ॥ भृज्जौ ॥ भृड्भ्याम् ॥ त्यदाद्यत्वं पररूपत्वम् ॥ **तदोस्स स्सावनन्त्ययोः ७-२-१०६** त्यदादीनां तकारदकारयोरनन्त्ययोस्सकारस्स्यात्सौ ॥ स्यः, त्यौ, त्ये ॥ सः, तौ, ते ॥ यः, यौ, ये ॥ एषः, एतौ, एते ॥ [2]**ङे प्रथमयोरम् ७-१-२८** युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः ॥ **मपर्यन्तस्य ७-२-९१** इत्यधिकृत्य ॥ **त्वाहौ सौ ७-२-९४** अनयोर्मपर्यन्तस्य त्वाहावादेशौ स्तः ॥ [3]**शेषे लोपः ७-२-९०** एतयोष्टिलोपः ॥ त्वम्, अहम् ॥ **युवावौ द्विवचने ७-२-९२** द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ **प्रथमायाश्च द्विवचने भाषायाम् ७-२-८८** औ ङ्येतयोरात्वं लोके ॥ युवाम्, आवाम् ॥ **यूयवयौ जसि ७-२-९३** अनयोर्मपर्यन्तस्य ॥ यूयम्, वयम् ॥ **त्वमावेकवचने ७-२-९७** एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥ **द्वितीयायां च ७-२-८७** अनयोरात्स्यात्, त्वाम्, माम् ॥ **शसो [4]न ७१-२-९** आभ्यां शसो नस्स्यात् ॥ अमोऽपवादः ॥ 'आदेः परस्य' संयोगान्तलोपः ॥ युष्मान्, अस्मान् ॥ **योऽचि ७-१-८९** अनयोर्यकारादेशस्स्यादनादेशेऽजादौ परतः, त्वया, मया ॥ **युष्मदस्मदोरनादेशे ७-२-८६** अनयोरात्स्यादनादेशे हलादौ

---

1 सकारककारयोः ॥ 2 ङे इति लुप्तषष्ठीकं पदम्' प्रथमाशब्दश्च 'प्रथमयोरिति प्रथमाद्वितीयाविभक्त्योर्लाक्षणिक' मिति भाष्यात् प्रथमाद्वितीयासमुदायपरः ॥ 3 'शेषे' इति षष्ठ्यर्थे सप्तमी ॥ 4 न इति लुप्तप्रथमाकं पदम् ॥

युवाभ्याम् (३), आवाभ्याम् (३) युष्माभिः अस्माभिः ॥ **तुभ्यमह्यौ ङयि ७-२-९५** अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तः ङयि ॥ अमादेशः ॥ टिलोपः ॥ तुभ्यम्, मह्यम् ॥ **भ्यसो[1]भ्यम् ७-१-३०** आभ्यांपरस्य ॥ युष्मभ्यम्, अस्मभ्यम् ॥ **एकवचनस्य च ७-१-३२** आभ्यां ङसेरत् ॥ त्वत्, मत् ॥ **पञ्चम्या अत् ७-१-३१** आभ्यां पञ्चम्याभ्यसो[2]ऽत् स्यात् ॥ युष्मत्, अस्मत् ॥ **तवममौ ङसि ७-२-९६** अनयोर्मपर्यन्तस्य तवममौ स्तः ङसि ॥ **युष्मदस्मद्भ्यां ङसोऽश् ७-१-२७** तव, मम ॥ युवयोः, आवयोः ॥ **साम आकम् ७-१-३३** आभ्यां साम आकम् ॥ युष्माकम्, अस्माकम् ॥ त्वयि, मयि ॥ युवयोः, आवयोः ॥ युष्मासु, अस्मासु ॥ **युष्मदस्मदोष्षष्ठी चतुर्थी द्वितीयास्थयोर्वा नावौ ८-१-२०** [3]पदात्परयोरपादादौ स्थितयोष्षष्ठ्यादिविशिष्टयोर्वां नानावित्यादेशौ स्तः ॥ **बहुवचनस्य वस्नसौ ८-१-२१** उक्तविधयोरनयोष्षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥ **तेमयावेकवचनस्य ८-१-२२** उक्तविधयोरनयोष्षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥ **त्वामौ द्वितीयायाः ८-१-२३** द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ॥

श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नश्शिवं वो नो दद्यात्सेव्योऽत्र वस्स नः ॥

---

1 भ्यसः भ्यम् अभ्यम् वा आदेशस्स्यात् ॥ 2 अकारादेशः ॥ 3 पदस्य, पदात्, अनुदात्तं सर्वमपदादौ इत्यधिकारत्रयमनुवर्तते ॥

*समान (एक) वाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः (वा-४७१४) *अन्वादेशे वा वक्तव्याः (वा-४७१७) [1]अन्वादेशे तु नित्यं स्युः ॥ 'धाता ते तव वाऽपत्यं तस्मै ते हरये नमः' इत्यादि ॥ सुपात् ॥ सुपाद् ॥ सुपादम्, सुपादौ (२) **पादः पत् ६-४-१३०** पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः ॥ सुपदः ॥ सुपदा, सुपाद्भ्याम् ॥ अग्निमत्-अग्निमद्, अग्निमथौ ॥ अग्निमथम् ॥ **अनिदितां हल उपधायाः क्ङिति ६-४-२४** हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति ॥ नुम् ॥ संयोगान्तस्य लोपः ॥ नस्य कुत्वेन ङः ॥ प्राङ्, प्राञ्चौ (२), प्राञ्चः ॥ **अचः ६-४-१३८** लुप्तनकारस्याऽञ्चते[2]र्भस्याकारस्य लोपः ॥ **चौ ६-३-१३८** लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः ॥ प्राचः, प्राग्भ्याम् ॥ प्रत्यङ्, प्रत्यञ्चौ (२), प्रतीचः ॥ प्रत्यग्भ्याम् ॥ उदङ्, उदञ्चौ (२) **उद ईत् ६-४-१३९** उच्छब्दात् परस्य लुप्तनकाराञ्चतेर्भस्याकारस्य ईत् ॥ उदीचः, उदीचा, उदग्भ्याम् ॥ **समः समि ६-३-९३** अप्रत्ययान्तेऽञ्चतौ ॥ सम्यङ्, सम्यञ्चौ (२) समीचः ॥ सम्यग्भ्याम् ॥ **सहस्य सध्रिः ६-३-९५** [3]तथा ॥ सध्र्यङ् ॥ **तिरसस्तिर्यलोपे ६-३-९४** अलुप्ताकारेऽञ्चतावप्रत्ययान्ते तिरसस्तिर्यादेशः ॥ तिर्यङ्, तिर्यञ्चौ (२), तिरश्चः ॥ तिर्यग्भ्याम् ॥ **नाञ्चेः पूजायाम् ६-४-३०** पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न ॥

---

1 एकदोक्तस्य पुनरुक्तौ ॥ 2 'भस्य' इत्यधिकारे 'अल्लोपो नः' इत्यतः अल्लोप इत्यनुवर्तते ॥ 3 व प्रत्ययान्तेऽञ्चतौ परे सहशब्दस्य सध्र्यादेश इत्यर्थः ॥

तेन 'उगिदचाम्' ॥ इति नुम् ॥ प्राङ्, प्राञ्चौ ॥ नलोपाभावादकारलोपो न ॥ प्राञ्चः ॥ प्राङ्भ्याम् ॥ प्राङ्क्षु ॥ एवं पूजार्थे प्रत्यङ्ङादयः ॥ क्रुङ्, क्रुञ्चौ ॥ क्रुङ्भ्याम् ॥ पयोमुक्-पयोमुग्, पयोमुचौ ॥ पयोमुग्भ्यां ॥ उगित्वान्नुम् ॥ **सान्तमहतस्संयोगस्य ६-४-१०** सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ॥ महान्, महान्तौ, महान्तः ॥ हे महन् ॥ महतः ॥ महद्भ्याम् ॥ **अत्वसन्तस्य चाधातोः ६-४-१४** अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे ॥ इति दीर्घे नुम् ॥ धीमान्, धीमन्तौ, धीमन्तः ॥ हे धीमन् ॥ शसादौ महद्वत् ॥ **भातेर्डवतुः (उ, ६३)** डित्वसामर्थ्यादभस्यापि टेर्लोपः ॥ भवान्, भवन्तौ ॥ शत्रन्तस्य तु न दीर्घः ॥ [1]भवन् ॥ **उभे अभ्यस्तम् ६-१-५** षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥ **नाभ्यस्ताच्छतुः ७-१-७८** अभ्यस्ताच्छतुर्नुम् न ॥ ददत्, ददतौ ॥ **जक्षित्यादयष्षट् ६-१-६** षड् धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञास्स्युः ॥ जक्षत्, जक्षतौ, जक्षतः ॥ एवं जाग्रत् । दरिद्रत् । शासत् । चकासत् ॥ गुप्, गुपौ, गुपः ॥ गुब्भ्याम् ॥ **त्यदादिषु दृशोऽनालोचने कञ्च ३-२-६०** त्यदादिषूपपदेष्वज्ञानार्थदृशेः कञ् । चात् क्विन् ॥ **आसर्वनाम्नः ६-३-९१** [2]दृग्दृशवतुषु ॥ षडगकाः ॥ तादृक्, तादृग्,

1 शत्रन्तस्यत्वन्तत्वाभावान्न दीर्घः ॥ 2 'दृग्दृशवतुषु इति सूत्रमनुवर्तते ॥ 'झलाञ्जशोऽन्ते' इत्यतः अन्ते इत्यनुवर्तते ॥ सर्वनाम्न अकारोऽन्तादेशस्स्यात् दृग्दृशवतुषु ॥

तादृशौ, तादृशः । तादृग्भ्याम् ॥ 'व्रश्चे'ति षः ॥ जस्त्वचर्त्वे ॥ विट्-विड्, विशौ, विशः । विड्भ्याम् ॥ **नशेर्वा ८-२-६३** नशेः कवर्गोऽन्तादेशो वा पदान्ते ॥ नक्-नग्, नट्-नड्, नशौ, नशः । नग्भ्यां-नड्भ्याम् ॥ **स्पृशोऽनुदके क्विन् ३-२-५८** अनुदके सुप्युपपदे स्पृशेः क्विन् ॥ घृतस्पृक्-घृतस्पृग्, घृतस्पृशौ, घृतस्पृशः ॥ षडगकाः ॥ दधृक्-दधृग्, दधृषौ । दधृग्भ्यां ॥ रत्नमुट्-रत्नमुड्, रत्नमुषौ, रत्नमुषः । रत्नमुड्भ्यां ॥ षट् (२) षड्भिः ॥ षड्भ्यः (२) षण्णां ॥ षट्सु ॥ रुत्वं प्रति षत्वस्यासिद्धत्वा 'त्ससजुषो' रिति रुत्वं ॥ **र्वोरुपधाया दीर्घ इकः ८-२-७६** रेफवान्तयोरुपधाया इको दीर्घः पदान्ते ॥ पिपठीः, पिपठिषौ । पिपठीर्भ्याम् ॥ **नुंविसर्जनीयशर्व्यवायेऽपि ८-३-५८** एतैः प्रत्येकं व्यवधानेऽपि इण् कुभ्यां परस्य मूर्धन्यादेशः ॥ [1]ष्टुत्वेन पूर्वस्य षः ॥ पिपठीष्षु ॥ पक्षे विसर्जनीयः । पिपठीःषु ॥ चिकीः, चिकीर्षौ । चिकीर्भ्याम् । चिकीर्षु ॥ विद्वान्, विद्वांसौ । हे विद्वन् ॥ **वसोस्सम्प्रसारणम् ६-४-१३१** वस्वन्तस्य भस्य सम्प्रसारणं स्यात् ॥ विदुषः ॥ 'वसुस्रंस्वि' ति दः ॥ विद्वद्भ्याम् ॥ **पुंसोऽसुङ् ६-१-९** [2]सर्वनामस्थाने ॥ पुमान्, हे पुमन्, पुमांसौ, पुंसः । पुम्भ्याम् । पुंसु ॥ 'ऋदुश'ने त्यवङ् ॥ उशना, उशनसौ ॥ *'अस्य सम्बुद्धावनङ् नलोपश्च वा वाच्यः' (वा ५०३७) हे उशन, हे उशनन्, हे उशनः, हे उशनसौ ॥

---

1 'ष्टुनाष्टुः' इत्यनेन ॥ 2 'इतोत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवर्तते । सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् इत्यर्थः ॥

उशनोभ्याम् । उशनस्सु ॥ अनेहाः, अनेहसौ । हे अनेहः ॥ वेधाः, वेधसौ । हे वेधः । वेधोभ्याम् ॥ **अदस औ सुलोपश्च** ७-२-१०७ अदस औस्स्या[1]त्सौ सुलोपश्च । 'तदो'रिति सः ॥ असौ ॥ त्यदाद्यत्वम् । पररूपत्वं ॥ वृद्धिः ॥ **अदसोऽसेर्दादुदो मः** ८-२-८० अदसोऽसान्तस्य दात्परस्य उदूतौ । दस्य मश्च ॥ आन्तरतम्याद्ध्रस्वस्य उः । दीर्घस्य ऊः ॥ अमू ॥ जसश्शी, गुणः ॥ **एत ईद्बहुवचने** ८-२-८१ अदसो दात्परस्यैत ईद्दस्य मो बह्वर्थोक्तौ ॥ अमी ॥ 'पूर्वत्रासिद्ध' मिति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे ॥ अमुम्, अमू, अमून् ॥ मुत्वे कृते घिसंज्ञायां नाभावः ॥ **न मु ने** ८-२-३ नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना, (अमूभ्याम् ३) अमीभिः । अमुष्मै, अमीभ्यः । (२) अमुष्मात् । अमुष्य, अमुयोः (२) अमीषां । अमुष्मिन्, अमीषु ॥

इति हलन्तपुंलिङ्गप्रकरणम् ॥

---

1 'तदोस्सस्स' इति सूत्रात् सौ इत्यनुवर्तते ॥

## ॥ अथ हलन्तस्त्रीलिङ्गप्रकरणम् ॥

---

**नहो धः ८-२-३४** नहो हस्य धः स्यात् [1] झलि पदान्ते च ॥ **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६-३-११६** क्विबन्तेषु पूर्वपदस्य दीर्घः ॥ उपानत्, उपानद्-उपानहौ । उपानत्सु ॥ क्विन्नन्तत्वात्कुत्वेन घः ॥ उष्णिक्, उष्णिहौ । उष्णिग्भ्याम् । उष्णिक्षु ॥ द्यौः, दिवौ, दिवः । द्युभ्याम् ॥ गीः, गिरौ, गिरः ॥ एवं पूः ॥ चतस्रः । चतसृणाम् ॥ का, के, काः । सर्वावत् ॥ **यस्सौ ७-२-११०** इदमो दस्य यः ॥ इयम् ॥ त्यदाद्यत्वम्, पररूपत्वम्, टाप्, 'द' श्चेति मः, इमे (२) इमाः (२) इमाम् ॥ अनया । हलि लोपः, आभ्याम्, (३) आभिः । अस्यै । अस्याः, (२) अनयोः, आसाम् । अस्याम्, आसु ॥ स्रक्, स्रजः । स्रग्भ्याम् ॥ त्यदाद्यत्वम्, टाप् ॥ स्या, त्ये, त्याः ॥ एवम् तद्, एतद् । वाक्, वाचौ । वाग्भ्याम् । वाक्षु ॥ अप्शब्दो नित्यं बहुवचनान्तः 'अप्तृ'न्निति दीर्घः, आपः । अपः ॥ **अपो भि ७-४-४८** अपस्तकारो भादौ प्रत्यये ॥ अद्भिः । अद्भ्यः (२) अपां, अप्सु ॥ दिक्-दिग्, दिशः । दिग्भ्याम् ॥ 'त्यदादि'ष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम्, दृक् - दृग्, दृशौ । दृग्भ्याम् ॥

---

1 'झलोझलि...' इत्यतः झलीत्यनुवर्तते ॥

त्विट्-त्विड्, त्विषौ। त्विड्भ्याम् ॥ 'ससजुषो' रिति रुत्वम् सजूः ॥ सजुषा, सजूर्भ्याम् ॥ आशीः, आशिषौ। आशीर्भ्याम्। असौ, उत्वमत्वे, अमू, अमूः ॥ अमुया, अमूभ्याम् (३) अमूभिः ॥ अमुष्यै, अमूभ्यः (२) अमुष्याः (२) अमुयोः (२) अमूषाम् ॥ अमुष्याम्, अमूषु ॥

इति हलन्तस्त्रीलिङ्गप्रकरणम् ॥

## ॥ अथ हलन्त नपुंसकलिङ्गप्रकरणम् ॥

स्वमोर्लुक् । दत्वम् । स्वनडुत्-स्वनडुद्, स्वनडुही (२) 'चतुरनडुहो 'रित्याम्, स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः, वारी, वारि । वारा, वार्भ्याम् । चत्वारि ॥ किम्, के, कानि । इदं, इमे, इमानि ॥ *अन्वादेशे नपुंसके एनद्वक्तव्यः (वा १५६९) एनत्-एनद्, एने, एनानि । एनेन, एनयोः (२) ब्रह्म, *सम्बुद्धौ नपुंसकानां नलोपो वा (वा ४७८६) हे ब्रह्मन्, हे ब्रह्म ॥ विभाषा ङिश्योः । अह्नी-अहनी, अहानि ॥ अहन् ८-२-६८ अहन्नित्यस्य रुः पदान्ते ॥ अहोभ्याम् ॥ दण्डि, दण्डिनी, दण्डीनि । दण्डिना, दण्डिभ्याम् । सुपथि । टिलोपः, सुपथी, सुपन्थानि ॥ ऊर्क्, ऊर्जी । ऊर्न्जि ॥ नरजानां संयोगः । तत्, ते, तानि । यत्, ये, यानि । एतत्, एते, एतानि । गवाक्, गोची, गवाञ्चि । पुनस्तद्वत् । गोचा, गवाग्भ्याम् ॥ शकृत्, शकृती, शकृन्ति—शकानि ॥ शक्ना शकृतेत्यादि ॥ ददत्, ददती ॥ **वा नपुंसकस्य** ७-१-७९ [1]अभ्यस्तात्परस्य वा नुम् सर्वनामस्थाने ॥ ददन्ति—ददति । तुदत् ॥ **आच्छीनद्योर्नुम्** ७-१-८० अवर्णान्तात्परो यः शतुरवयवस्तदन्तस्य नुम्वा शीनद्योः ॥ तुदन्ती-तुदती, तुदन्ति । भात्, भान्ती-भाती, भान्ति । पचत् ॥ **शप्श्यनोर्नित्यम्** ७-१-८१ शप् श्यनोरात्परो यश्शतुरवयवस्तदन्तस्य नुम् शीनद्योः ॥

---

1 'नाभ्यस्ताच्छतुः' इत्यतः अभ्यस्तादित्यनुवर्तते ॥

पचन्ती, पचन्ति । दीव्यत्, दीव्यन्ती, दीव्यन्ति । धनुः, धनुषी ॥ 'सां' तेति दीर्घः, 'नुम्विसर्जनी' येति षः, धनूंषि । धनुषा, धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पयः, पयसी, पयांसि । पयसा, पयोभ्याम् ॥ सुपुम्, सुपुंसी, सुपुमांसि । अदः । विभक्तिकार्यं, ततः उत्वमत्वे । अमू, अमूनि । शेषं पुंवत् ॥

इति हलन्तनपुंसकलिङ्गप्रकरणम् ॥

## ॥ अथ अव्ययप्रकरणम् ॥

**स्वरादिनिपातमव्ययम्** १-१-३७ स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायं, चिरम्, मनाक्, ईषत्, जोषं, तूष्णीं, बहिस्, अवस्, समया, निकषा, स्वयं, वृथा, नक्तं, नञ्, हेतौ, इद्धा, अद्धा, सामि ॥ 'वत्' (गण ४) ब्राह्मणवत्, क्षत्रियवत्, सना, सनत्, सनात्, उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, स्वधा, अलं, वषट्, श्रौषट्, वौषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रबाहुकम्, प्रवाहिका, आर्यहलम् ॥ अभीक्ष्णम्, साकम्, सार्धम्, नमस्, हिरुक्, धिक्, अथ, अम्, आम्, प्रताम्, प्रशान्, प्रताम्, मा, माङ् ॥ आकृतिगणोऽयम् ॥ च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, सूपत्, कुवित्, नेत्, चेत्, चण्, यत्र, तत्र, कच्चित्, नह, हन्त, माकिः, माकिम्, नकिः, नकिम्, आकिम्, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, न्वै, रै, श्रौषट्, वौषट्, स्वाहा, स्वधा, वषट्, ओम्, तुम्, तथाहि, खलु, किल, अथ, सुष्ठु, स्म, आदह *'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' (गण १६) अवदत्तं, अहं युः, अस्तिक्षीरा, अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ, पशु, शुकम्, यथा, कथाच, पाट्, प्याट्,

अङ्ग, है, हे, भोः, अये, द्य, विषु, एकपदे, युत्, आतः ॥ चादिरप्याकृतिगणः ॥ तसिलादयः प्राक् पाशपः ॥ शस् प्रभृतयः प्राक् समासान्तेभ्यः ॥ अम्, आम्, कृत्वोर्थाः, तसिवती, नानाञौ, एतदन्तमव्ययम् ॥ अतः, इत्यादि ॥ **कृन्मेजन्तः १-१-३९** कृद्यो मान्त एजन्तश्च तदन्तमव्ययम् ॥ स्मारं स्मारं, जीवसे, पिबध्यै ॥ **क्त्वातोसुन् कसुनः १-१-४०** एतदन्तमव्ययम् ॥ कृत्वा, उदेतोः, विसृपः ॥ **अव्ययीभावश्च १-१-४१** अधिहरि ॥ **अव्ययादाप्सुपः २-४-८२** अव्ययादापस्सुपश्च [1]लुक् ॥ तत्र शालायाम् ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपंचैव हलन्तानां यथा वाचा निशा दिशा ॥
अवगाहः, वगाहः, अपिधानम्, पिधानम् ॥

इत्यव्ययप्रकरणम् ॥

---

1 'ण्यक्षत्रियार्षञितो यूनि लुक् ...' इत्यतः लुगित्यनुवर्तते ॥

## ॥ अथ तिङन्तभ्वादिप्रकरणम् ॥

लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ् ॥ एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥ **लः कर्मणि च भावे चाकर्मकेभ्यः ३-४-६९** लकारा[1]स्सकर्मकेभ्यः कर्मणि कर्तरि च स्यु[2]रकर्मकेभ्यो भावे कर्तरि च ॥ [3]**वर्तमाने लट् ३-२-१२३** वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् ॥ अटावितौ ॥ उच्चारणसामर्थ्या-ल्लस्य नेत्वं ॥ भूसत्तायाम् ॥ (१) कर्तृविवक्षायां भू+ल् इति स्थिते ॥ **तिप्तस्झि सिप् थस् थ मिब् वस् मस् तातांझथासाथांध्व-मिड्वहि महिङ् ३-४-७८** एतेऽष्टादश [4]लादेशास्स्युः ॥ **लः परस्मै-पदम् १-४-९९** [5]लादेशाः परस्मैपदसंज्ञास्स्युः ॥ **तङाना**[6]**वात्मने-पदम् १-४-१००** तङ् प्रत्याहारश्शानच् कानचौ चैतत्संज्ञकास्स्युः॥ पूर्वसंज्ञापवादः ॥ **अनुदात्तङित आत्मनेपदम् १-३-१२** अनुदात्तेतो [7]ङितश्च [8]धातोरात्मनेपदं स्यात् ॥ **स्वरितञितः कर्त्र-**

---

1 फलव्यधिकरणव्यापारवाचकत्वम् सकर्मकत्वम् ॥ 2 फलसमानाधि-करणव्यापारवाचकत्वं अकर्मकत्वम् ॥ 3 वर्तमान कालक्रियावृत्तेः इत्यर्थः ॥ वर्त-मानत्वं च कालगतप्रारब्धापरिसमाप्तक्रियाश्रयत्वम् ॥ 4 लस्य इत्यधिकारो विद्यते ॥ 5 लादेशाः, लमालोद्देशेन विहिता आदेशा इत्यर्थः ॥ तेन सिजादीनां परस्मैपद संज्ञा न भवति; तेषां 'च्लेः इत्यादि विशिष्टानुवादेन विहितत्वात् ॥ 6 अनया संज्ञाया पूर्वविहितपरस्मैपदसंज्ञाया बाधः ॥ 7 ङितश्चेत्यत्र विशेष्य-विशेषणभावेन तदन्तलाभात् यङन्तादप्यात्मनेपदं भवति ॥ 8 'भूवादयो धातवः' इत्यतः मण्डूकप्लुत्याऽनुवृत्तस्य धातव इत्यस्य षष्ठ्यन्ततया विपरि-णामः ॥

**भिप्राये क्रियाफले १-३-७२** स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि [1]क्रियाफले ॥ **शेषात्कर्तरि परस्मैपदम् १-३-७८** आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥ **तिङस्त्रीणि त्रीणि प्रथम मध्यमोत्तमाः १-४-१०१** तिङ उभयोः पदयोस्त्रयस्त्रयस्त्रिकाः क्रमादेतत्संज्ञास्स्युः ॥ **तान्येकवचनद्विवचनबहुवचनान्येकशः १-४-१०२** लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥ **युष्म[2]द्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १-४-१०५** तिङ्वाच्यकारकवाचिनि युष्मद्यप्रयुज्यमाने प्रयुज्यमाने च मध्यमः ॥ **अस्मद्युत्तमः १-४-१०७** [3]तथाभूतेऽस्मद्युत्तमः ॥ **शेषे प्रथमः १-४-१०८** मध्यमोत्तमयोरविषये प्रथमः स्यात् ॥ भू+ति, इति जाते ॥ **तिङ्शित्सार्वधातुकम् ३-४-११३** तिङश्शितश्च धात्वधिकारोक्ता एतत्संज्ञास्स्युः ॥ **कर्तरि शप् ३-१-६८** कर्त्रर्थे सार्वधातुके परे धातोश्शप् ॥ **सार्वधातुकार्धधातुकयोः ७-३-८४** अनयोः परयोरिगन्तस्यांगस्य गुणः अवादेशः । भवति, भवतः ॥ **झोऽन्तः ७-१-३** [4]प्रत्ययावयवस्य झस्यान्तादेशः ॥ 'अतोगुणे,' भवन्ति ॥ भवसि, भवथः, भवथ ॥ **अतो दीर्घो यञि ७-३-१०१** अतोऽङ्गस्य दीर्घो यञादौ

1 क्रियाफलं च यदुद्देशेन क्रियाप्रवृत्तिरवगता तदेव, न तु दक्षिणादिरूपम् ॥ 2 उप=समीपे उच्चारितं पदमुपपदम्, न तु कृत्रिमम् ॥ तस्य इहानुपयोगादप्राप्तेश्च ॥ 3 अत्र आद्यन्तपदरहितम् 'युष्मद्युपपदे ..' इति सूत्रमनुवर्तते ॥ तदाह तथेत्यादि ॥ 4 प्रत्ययावयवस्येत्युक्तत्वात् उज्झितेत्यादौ न प्रसङ्गः ॥

सार्वधातुके ॥ भवामि, भवावः, भवामः ॥ स भवति, तौ भवतः, ते भवन्ति ॥ त्वं भवसि, युवां भवथः, यूयं भवथ ॥ अहं भवामि, आवां भवावः, वयं भवामः ॥ [1]**परोक्षे लिट् ३-२-११५** [2]भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् ॥ लस्य तिबादयः ॥ **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३-४-८२** लिटस्तिबादीनां णलादयः क्रमात्स्युः ॥ भू+अ, इति स्थिते—**भुवो वुग्लुङ्लिटोः ६-४-८८** [3]अचि ॥ **लिटि धातोरनभ्यासस्य ६-१-८** लिटि परेऽनभ्यासधात्ववयव[4]स्यैकाचः प्रथमस्य द्वे स्तः आदिभूतादचः परस्य तु द्वितीयस्य ॥ भूव्+भूव्+अ, इति स्थिते ॥ **पूर्वोऽभ्यासः ६-१-४** अत्र ये द्वे तयोः ॥ **हलादिश्शेषः ७-४-६०** [5]अभ्यासस्यादिर्हल् शिष्यते, अन्ये हलो लुप्यन्ते ॥ **ह्रस्वः ७-४-५९** अभ्यासस्याचः ॥ **भवतेरः ७-४-७३** भवतेरभ्यासस्योकारस्य अस्स्याल्लिटि ॥ **अभ्यासे चर्च ८-४-५४** अभ्यासे झलां चरस्स्युर्जशश्च ॥ झशां जशः, खयां चरः, इति विवेकः ॥ बभूव, बभूवतुः, बभूवुः ॥ **लिट् च ३-४-११५** लिडादेशस्तिङार्धधातुकसंज्ञः ॥ **आर्धधातुकस्येड्वलादेः ७-२-३५** बभूविथ, बभूवथुः, बभूव ॥ बभूव, बभूविव, बभूविम ॥ [6]**अनद्यतने लुट् ३-३-१५**

---

1 पारोक्ष्यं च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम् ॥ 2 भूतत्वं च वर्तमानध्वंसप्रतियोगिकालवृत्तित्वम् ॥ 3 'अचिश्नु' इत्यतः अचीत्यनुवर्तते ॥ भुवः लुङ्लिटोरचि परे वुगागमस्स्यात् ॥ 4 'एकाचो द्वे प्रथमस्य' 'अजादेर्द्वितीयस्य' इति सूत्रे अनुवर्तेते ॥ 5 'लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येत्यनुवर्तते ॥ 6 अतीतरात्रेरन्त्ययामेन आगामिन्या रात्रेःपूर्वयामेन च सहितः कालः अद्यतनः, तद्भिन्नः अनद्यतनः ॥

भविष्यत्यनद्यतने अर्थे धातोर्लुट् ॥ **स्यतासी लृलुटोः ३-१-३३** धातोरेतौ स्तो लृलुटोः परतः । शबाद्यपवादः । लृ इति लृङ्लृटो-र्ग्रहणम् ॥ **आर्धधातुकं शेषः ३-४-११४** तिङ्शिद्भ्योऽन्यो 'धातो'रिति विहितः प्रत्यय एतत्संज्ञस्स्यात् ॥ इट् ॥ **लुटः प्रथमस्य डारौ रसः २-४-८५** डित्त्वसामर्थ्यादभस्यापि टेर्लोपः ॥ भविता ॥ [1]**तासस्त्योर्लोपः ७-४-५०** सादौ प्रत्यये ॥ **रि च ७-४-५१** रादौ प्रत्यये तथा । भवितारौ, भवितारः । भवितासि, भवितास्थः, भवितास्थ । भवितास्मि, भवितास्वः, भवितास्मः ॥ **लृट् शेषे च ३-३-१३** भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां वा ॥ स्यः ॥ इट्, भविष्यति, भविष्यतः, भविष्यन्ति । भवि-ष्यसि, भविष्यथः, भविष्यथ । भविष्यामि, भविष्यावः, भवि-ष्यामः ॥ **लोट् च ३-३-१६२** विध्याद्यर्थेषु धातोर्लोट् ॥ **आशि-षि लिङ्लोटौ ७-३-१७३ एरुः ३-४-८६** लोट इकारस्य उः ॥ भवतु ॥ **तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ७-१-३५** आशिषि तुह्योस्तातङ्वा ॥ ङकारो गुणवृद्धिनिषेधार्थः सम्प्रसारणार्थश्च ॥ तेन परत्वात्सर्वादेशः । भवतात् ॥ **लोटो लङ्वत् ३-४-८५** लोटस्ता-मादयस्सलोपश्च ॥ **तस्थस्थमिपां तां तं तामः ३-४-१०१** ङितश्च-तुर्णां तामादयः क्रमात् । भवताम्, भवन्तु ॥ **सेर्ह्यपिच्च ३-४-८७** लोटस्सेर्हिः सोऽपिच्च ॥ **अतो हेः ६-४-१०५** [2]लुक् । भव,

---

1 तासेरस्तेश्च लोपः ॥ 2 'चिणोलुक्' इत्यतः लुगित्यनुवर्तते ॥ अतःपरस्य हेर्लुक् ॥

भवतात्-भवतम्, भवत ॥ **मेर्निः ३-४-८९** लोटः ॥ **आडुत्तमस्य पिच्च ३-४-९२** लोडुत्तमस्याट् पिच्च । हिन्योरुत्वं न; इकारोच्चारणसामर्थ्यात्, भवानि ॥ **ते प्राग्धातोः १-४-८०** ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ॥ **आनि लोट् ८-४-१६** उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णस्यात् ॥ प्रभवाणि ॥ **दुरष्षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः (वा ११३८)** दुःस्थितिः, दुर्भवानि ॥ **अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् (वा ११४१)** अन्तर्धा, अन्तर्धिः, अन्तर्भवाणि ॥ **नित्यङितः ३-४-९९** सकारान्तस्य ङिदुत्तमस्य नित्यं [1]लोपः ॥ 'अलोऽन्त्यस्ये'ति सलोपः ॥ भवाव, भवाम ॥ **अनद्यतने लङ् ३-२-१११** अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् ॥ **लुङ् लङ् लृङ्क्ष्वडुदात्तः ६-४-७१** एष्वङ्ग [2]स्याट् ॥ **इतश्च ३-४-१००** ङितो लस्य परस्मैपदमिकारान्तं यत् तस्य लोपः ॥ अभवत्, अभवताम्, अभवन् । अभवः, अभवतम्, अभवत । अभवम्, अभवाव, अभवाम ॥ [3]**विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ३-३-१६१** एष्वर्थेषु धातोर्लिङ् ॥ **यासुट्परस्मैपदेषूदात्तो ङिच्च ३-४-१०३** लिङः परस्मैपदानां यासुडागमो ङिच्च ॥ **लिङस्सलोपोऽनन्त्यस्य ७-२-७९** सार्वधातुकलिङोऽनन्त्यस्य

---

1 'इतश्च लोपः' इत्यतः लोप इत्यनुवर्तते ॥ 2 अडागमः स च उदात्तः ॥ 3 विधिः प्रेरणं, भृत्यादेः निकृष्टस्य प्रवर्तनम्, निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्, आमन्त्रणं कामचारानुज्ञा, अधीष्टस्सत्कारपूर्वको व्यापारः, सम्प्रश्नः तद्वा कर्तव्य मेतद्वा? इत्यादिरूपः विचारः ॥

सस्य लोपः ॥ इति प्राप्ते—**अतो येयः** ७-२-८० अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्येय् । सन्धिरार्षः । गुणः ॥ [1]**लोपो व्योर्वलि** ६-१-६६ भवेत्, भवेताम् ॥ **झेर्जुस्** ३-४-१०८ लिङः भवेयुः । भवेः, भवेतम्, भवेत । भवेयम्, भवेव, भवेम ॥ **लिङाशिषि** ३-४-११६ आशिषि लिङ्स्तिङार्धधातुकसंज्ञस्स्यात् ॥ **किदाशिषि** ३-४-१०४ आशिषि लिङो यासुट् कित् ॥ 'स्कोस्संयोगाद्यो'रिति सलोपः ॥ **क्ङिति च** १-१-५ गित्किङ्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः ॥ भूयात्, भूयास्ताम्, भूयासुः । भूयाः भूयास्तम्, भूयास्त । भूयासम्, भूयास्व, भूयास्म ॥ **लुङ्** ३-२-११० भूतार्थे धातोर्लुङ् स्यात् ॥ **माङि लुङ्** ३-३-१७५ सर्वलकारापवादः ॥ **स्मोत्तरे लङ् च** ३-३-१७६ स्मोत्तरे माङि लङ् स्यात्, चाल्लुङ् ॥ [2]**च्लि लुङि** ३-१-४३ शबाद्यपवादः ॥ **च्लेस्सिच्** ३-१-४४ इचावितौ ॥ **गातिस्थाघुपाभूभ्यस्सिचः परस्मैपदेषु** २-४-७७ लुक् । गापाविहेणादेशपिबती गृह्येते ॥ **भूसुवोस्तिङि** ७-३-८८ भू सू एतयोस्सार्वधातुके तिङि गुणो न । अभूत्, अभूताम्, अभूवन् । अभूः, अभूतम्, अभूत । अभूवम्, अभूव, अभूम ॥ **न माङ्योगे** ६-४-७४ [3]अडाटौ न स्तः ॥ मा भवान् भूत्, मास्म भवत्, मास्मभूद्वा ॥

---

1 वकारयकारयोर्लोपस्स्याद्वलि परे ॥ 2 धातोः च्लिप्रत्ययस्स्यात् लुङि परे ॥ 3 'लुङ् लङ् ...' इत्यतः अट् इति 'आडजादीना' मित्यतः आट् इति च अनुवर्तते ॥

**लिङ्निमित्ते लृङ्क्रियातिपत्तौ ३-३-१३९** हेतुहेतुमद्भावादिलिङ्निमित्तं तत्र भविष्यदर्थे लृङ्क्रियाया अनिष्पत्तौ गम्यमानायाम् ॥ अभविष्यत्, अभविष्यताम्, अभविष्यन् । अभविष्यः, अभविष्यतं, अभविष्यत । अभविष्यम्, अभविष्याव, अभविष्याम ॥ सुवृष्टिश्चेदभविष्यत्, तदा सुभिक्षमभविष्यत् । इत्यादि ज्ञेयम् ॥ अतसातत्य गमने (२) अतति ॥ **अत आदेः ७-४-७०** [1]अभ्यासस्यादेरतो दीर्घस्स्यात् । आत, आततुः, आतुः । आतिथ, आतथुः, आत । आत, आतिव, आतिम । अतिष्यति ॥ आततु ॥ **आडजादीनाम् ६-४-७२** अजादेरङ्गस्याट् [2]लुङ्लङ्लृङ्क्षु ॥ आतत्, आतेत् आतेताम् । अत्यात्, अत्यास्तां ॥ लुङि सिचि इडागमे कृते— **अस्ति सिचोऽपृक्ते ७-३-९६** विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः ॥ **इट ईटि ८-२-२८** इटः परस्य [3]सस्य लोपस्यादीटि ॥ *सिज्लोप एकादेशे सिद्धो वाच्यः (वा ४७७१) आतीत्, आतिष्टाम् ॥ **सिजभ्यस्त विदिभ्यश्च ३-४-१०९** सिचोऽभ्यस्ताद्विदेश्च परस्य [4]ङित्सम्बन्धिनो झे जुंस् ॥ आतिषुः । आतीः, आतिष्टं, अतिष्ट । आतिषं, अतिष्व, आतिष्म । आतिष्यत् ॥ षिवुगत्यां (३) **पुगन्तलघूपधस्य च ७-३-८६** पुगन्तस्य लघूपधस्य चाङ्गस्य इको गुणस्सार्वधातुकार्धधातुकयोः । 'धात्वादे'रिति सः ।

---

1 'लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येति 'दीर्घइणः किति' इत्यतः दीर्घं इति च अनुवर्तते ॥ 2 लुङ् लङ्...' इति पूर्वसूत्रमनुवर्तते ॥ 3 'संयोगान्तस्य लोपः' 'रात्सस्य' एताभ्यां क्रमात् लोप इति सस्येति च अनुवर्तते ॥ 4 'यासुट् परस्मै...' इत्यतः ङिच्चेति 'झे जुस्' इति सूत्रं चानुवर्तते ॥

सेधति । षत्वं । सिषेध ॥ **असंयोगाल्लिट् कित् १-२-५** असंयोगात्परोऽपि लिट् कित्स्यात् । सिषिधतुः, सिषिधुः । सिषेदिथ, सिषिधथुः, सिषिध । सिषेध, सिषिधिव, सिषिधिम । सेधिता ॥ सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् ॥ एवं चिती संज्ञाने (४) शुच शोके (५) गद व्यक्तायां वाचि ॥ (६) गदति ॥ **नेर्गद नद पत पद घुमास्यति हन्ति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धिषु च ८-४-१७** उपसर्गस्थान्निमित्तात् परस्य नेर्णो गदादिषु परेषु । प्रणिगदति ॥ **कुहोश्चुः ७-४-६२** अभ्यासकवर्गहकारयोश्चवर्गादेशः ॥ **अत उपधायाः ७-२-११६** [1]वृद्धिस्स्याञ्ञिति णिति च प्रत्यये । जगाद, जगदतुः, जगदुः । जगदिथ, जगदथुः, जगद ॥ **णलुत्तमो वा ७-१-९१** णित्स्यात् । जगाद–जगद, जगदिव, जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत्, गद्यात् ॥ **अतो हलादेर्लघोः ७-२-७** हलादेर्लघो [2]वृद्धिर्वेडादौ परस्मैपदे सिचि ॥ अगादीत्–अगदीत् । अगदिष्यत् ॥ एवं खद स्थैर्यहिंसाभक्षणेषु ॥ णद अव्यक्ते शब्दे ॥ (७) **णो नः ६-१-६५** धत्वादेर्णस्य नः । णोपदेशास्त्वनर्द्नाटिनाथ्नाधनन्द्नक्कनॄनृतः ॥ **उपसर्गादसमासेऽपि णोपदेशस्य ८-४-१४** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य [3]णः । प्रणदति, प्रणिनदति । नदति ।

---

1 'मृजेर्वृद्धिः' 'अचोञ्णिति' एताभ्यां क्रमात् वृद्धिरिति ञ्णितीति च अनुवर्तेते ॥ 2 'सिचि वृद्धिः...' इत्यादिसूत्रेभ्यो वृद्ध्यादीनामनुवृत्तिः ॥ 3 'एकाजुत्तर...' इत्यस्मात् णः इत्यनुवर्तते ॥

ननाद ॥ **अत एकहल्मध्येऽनादेशादेर्लिटि ६-४-१२०** लिण्णिमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्व [1]मभ्यासलोपश्च किति लिटि ॥ **थलि च सेटि ६-४-१२१** प्रागुक्तं स्यात् ॥ नेदिथ, नेदथुः, नेद । ननाद—ननद, नेदिव, नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्—अनदीत् । अनदिष्यत् ॥ टुनदि समृद्धौ (८) **आदिर्ञिटुडवः १-३-५** [2]उपदेशे धातोराद्या एते इतस्स्युः ॥ **इदितो नुम् धातोः ७-१-५८** अन्त्येदितो धातोर्नुम् ॥ नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् ॥ एवं णिदि कुत्सायाम्, गडि वदनैकदेशे, चदि आह्लादे, क्रदि आह्वाने रोदने च ॥ अर्च पूजायाम् ॥ (९) अर्चति ॥ 'अत आदेः' **तस्मान्नुड् द्विहलः ७-४-७१** द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात् ॥ आनर्च । आनर्चतुः । अर्चिता । अर्चिष्यति ॥ अर्चतु । आर्चत् । अर्चेत्, अर्च्यात् । अर्चीत् ॥ अर्चिष्यत् । व्रज गतौ ॥ (१०) व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् । **वद व्रज हलन्तस्याचः ७-२-३** एषामचो [3]वृद्धिस्सिचि परस्मैपदेषु ॥ अव्राजीत् । अव्रजिष्यत् ॥ कटे वर्षावरणयोः (११) कटति । चकाट । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ॥

---

1 'व्यसोरेद्धावभ्यासलोपश्च' इत्यनुवर्तते ॥ 2 'उपदेशेऽजनुनासिक इत्' इत्यनुवर्तते ॥ 3 'सिचि वृद्धिः...' 'नेटि' च अनुवर्तेते ॥

**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७-२-५** हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि ॥ अकटीत् । अकटिष्यत् ॥ गुपू रक्षणे ॥ (१२) **गुपूधूपविच्छिपणिपनिभ्य आयः ३-१-२८** स्वार्थे ॥ **सनाद्यन्ता धातवः ३-१-३२** [1]सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां, ते धातुसंज्ञकाः ॥ धातुत्वाल्लडादयः ॥ गोपायति ॥ **आयादय आर्धधातुके वा ३-१-३१** आर्धधातुकविवक्षाया[2]मायादयो वा स्युः ॥ * **कास्यनेकाच आम् वक्तव्यः (वा)** लिटि ॥ आस्कासोराम् विधानान्मस्य नेत्वम् ॥ **अतो लोपः ६-४-४८** [3]आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके ॥ **आमः २-४-८१** आमः परस्य [4]लुक् ॥ **कृञ् चानुप्रयुज्यते लिटि ४-१-४०** आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते ॥ परत्वाद्वृद्धौ प्राप्तायां **द्विर्वचनेऽचि १-१-५९** द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये ॥ तेषां द्वित्वादि ॥ **उरत् ७-४-६६** अभ्यासऋवर्णस्य अत् प्रत्यये ॥ तत उत्तरखण्डे वृद्धिः, गोपायां चकार ॥ परत्वाद्यण्न, गोपायां चक्रतुः ॥ **एकाच उपदेशेऽनुदात्तात् ७-२-१०** उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्धधातुक[5]स्येण्न.

ऊदॄदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥

---

1 श्लो. 'सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारक्विप् णिज् यङौ तथा यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः' 2 आयेयङ् णिज इत्यर्थः ॥ 3 आर्धधातुकेत्यनुवर्तते ॥ 4 'ण्यक्षत्रिय...' इत्यतः लुगित्यनुवर्तते ॥ 5 'नेड्वशि कृति' इत्यतः नेट् इत्यनुवर्तते ॥

कान्तेषु शक्लेकः ॥ चान्तेषु पच् मुच् रिच् वच् विच् सिचः षट् । छान्तेषु प्रच्छ एकः । जान्तेषु त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् यज् युज् रुज् रञ्ज् विजिर् स्वञ्ज् सञ्ज् सृजः पञ्चदश । दान्तेषु अद् क्षुद् खिद् छिद् तुद् नुद् पद्य भिद् विद्य विनद् विन्द् शद् सद् स्विद्य स्कन्दि हदष्षोडश ॥ धान्तेषु क्रुध् क्षुध् बुध्य बन्ध् युध् रुध् राध् व्यध् शुध् साध् सिध्य एकादश ॥ नान्तेषु मन्य हनौ द्वौ । पान्तेषु आप् क्षिप् छुप् तप् तिप् तृप्य-दृप्य लिप् लुप् वप् शप् स्वप् सृप स्त्रयोदश ॥ भान्तेषु यभ् रभ् लभस्त्रयः । मान्तेषु गम् नम् यम् रमश्चत्वारः । शान्तेषु क्रुश् दन्श् दिश् दृश् मृश् रिश् रुश् लिश् विश् स्पृशो दश । षान्तेषु कृष् त्विष् तुष् द्विष् दुष् पुष्य पिष् विष् शिष् शुष् श्लिष एकादश । सान्तेषु घस् वसती द्वौ ॥ हान्तेषु दह् दिह् दुह् नह् मिह् रुह् लिह् वहोऽष्टौ । अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतं विन्दतिना सह ॥ गोपायां चकर्थ, गोपायां चक्रथुः, गोपायां चक्र । गोपायां चकार, गोपायां चकृव, गोपायां चकृम । गोपायाम्बभूव, गोपायामास । जुगोप, जुगुपतुः, जुगुपुः ॥ **स्वरति सूतिसूयति धूञूदितो वा ७-२-४४** स्वरत्यादेरूदितश्च परस्य [1]वलादेरार्धधातुकस्येड्वा स्यात् ॥ जुगोपिथ, जुगोप्थ । गोपायिता, गोपिता, गोप्ता । गोपायिष्यति, गोपिष्यति, गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात्, गुप्यात् । अगोपायीत् ॥ **नेटि ७-२-४**

---

1 'आर्धधातुकस्येड्वलादेः' इति सूत्रमनुवर्तते ॥

इडादौ सिचि हलन्तस्य [1]वृद्धिर्न ॥ अगोपीत्, अगौप्सीत् ॥ **झलो झलि ८-२-२६** झलः परस्य [2]सस्य लोपो झलि॥ अगौप्तां, अगौप्सुः । अगौप्सीः, अगौप्तं, अगौप्त । अगौप्सं, अगौप्स्व, अगौप्स्म । अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत् ॥ क्षिक्षये (१३) क्षयति । चिक्षाय, चिक्षियतुः, चिक्षियुः ॥ 'एकाच' इति निषेधे प्राप्ते—

**कृ सृ भृ वृ स्तु द्रु स्रु श्रुवो लिटि ७-२-१३** क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपीट् स्यात् ॥ **अचस्तास्वत् थल्यनिटो नित्यम् ७-२-६१** उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् [3]न ॥ **उपदेशेऽत्वतः ७-२-६२** उपदेशेऽकारवान् यस्तासौ नित्यानिट्, ततः परस्य थल इण् न स्यात् ॥ **ऋतो भारद्वाजस्य ७-२-६३** तासौ नित्यानिट ऋदन्तादेव थलो, नेट् भारद्वाजस्य मते । तेनान्यस्य स्यादेव ॥ अयमत्र संग्रहः—

अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम्,
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

चिक्षयथ, चिक्षेथ, चिक्षियथुः, चिक्षिय । चिक्षाय-चिक्षय, चिक्षियिव, चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् ॥ **अकृत्सार्वधातुकयोर्दीर्घः ७-४-२५** अजन्ताङ्गस्य दीर्घो [4]यादौ प्रत्यये न तु कृत्सार्वधातुकयोः ॥ क्षीयात् ॥ **सिचि वृद्धिः**

1 'सिचि वृद्धिः' इत्यतः वृद्धेरनुवृत्तिः॥ 2 'रात्सस्य' इत्यतः सस्येति 'संयोगान्तस्य लोपः' इत्यतः लोप इति चानुवर्तते ॥ 3 'नवृद्भ्य...इत्यतः नेत्यनुवर्तते ॥ 4 'अयङ् यि' इत्यतः यि इत्यनुवर्तते ॥

**परस्मैपदेषु ७-२-१** इगन्ताङ्गस्य वृद्धिस्स्यात्परस्मैपदे सिचि ॥ अक्षैषीत् । अक्षेष्यत् ॥ तप सन्तापे (१४) तपति । तताप, तेपतुः, तेपुः । तेपिथ-ततप्थ । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत्, अताप्तां । अतप्स्यत् ॥ क्रमु पादविक्षेपे (१५) **वा भ्राशभ्लाश भ्रमु क्रमु क्लमु त्रसि त्रुटि लषः ३-१-७०** [1]एभ्यश्श्यन्वा [2]कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ॥ **क्रमः परस्मैपदेषु ७-३-७६** क्रमेर्दीर्घः परस्मैपदे [3]शिति ॥ क्राम्यति-क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु-क्रामतु । अक्राम्यत्-अक्रामत् । क्राम्येत्-क्रामेत्, क्रम्यात्, अक्रमीत् । अक्रमिष्यत् ॥ पापाने (१६) **पा घ्रा ध्मा स्था म्ना दाण् दृश्यर्ति सर्ति शदसदां पिब जिघ्र धम तिष्ठ मन यच्छ पश्यर्च्छधौ शीय सीदाः ७-३-७८** पादीनां पिबादयस्स्युरित्संज्ञकशादौ प्रत्यये । पिबादेशोऽदन्तस्तेन न गुणः ॥ पिबति ॥ [4]**आत औ णलः ७-१-३४** पपौ ॥ **आतो लोप इटि च ६-४-६४** अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः ॥ पपतुः, पपुः । पपिथ-पपाथ, पपथुः, पप । पपौ, पपिव, पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ॥ **एर्लिङि ६-४-६७** [5]घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि ॥ पेयात् ॥ 'गाति स्थेति' सिचो लुक् ।

---

1 धातुभ्यः ॥ 2 'कर्तरि शप्' इत्यतः कर्तरीत्यनुवर्तते ॥ 3 'ष्ठिवुक्लमु...' इत्यतः शितीत्यनुवर्तते ॥ 4 आदन्ताद्धातोर्णल औकारादेशस्स्यात् ॥ 5 'घुमास्था...इति पूर्वसूत्रस्यानुवृत्तिः ॥

अपात्, अपाताम् ॥ **आतः ३-४-११०** [1]सिज्लुकि आदन्तादेव झेर्जुस् ॥ **उस्यपदान्तात् ६-१-९६** अपदान्तादकारादुसि पररूपमेकादेशः ॥ अपुः ॥ अपास्यत् ॥ ग्लै म्लै हर्षक्षये (१७) हर्षक्षयो धातुक्षयः ॥ ग्लायति ॥ **आदेच उपदेशेऽशिति ६-१-४५** उपदेशे एजन्तस्य धातोरात्वं न तु शिति ॥ जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ॥ **वाऽन्यस्य संयोगादेः ६-४-६८** घुमास्थादेरन्यस्य संयोगादेर्धातो रात एत्वं वाऽऽर्धधातुके किति लिङि॥ ग्लेयात्, ग्लायात् ॥ **यमरमनमातां सक् च ७-२-७३** एषां सक् स्यादेभ्यस्सिच [2]इट् स्यात् परस्मैपदेषु ॥ अग्लासीत् । अग्लास्यत् ॥ एवं म्लायतीत्यादि ॥ ह्वृ कौटिल्ये (१८) ह्वरति ॥ **ऋतश्च संयोगादेर्गुणः ७-४-१०** ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि । उपधाया वृद्धिः ॥ जह्वार, जह्वरतुः, जह्वरुः । जह्वर्थ, जह्वरथुः, जह्वर । जह्वार-जह्वर, जह्वरिव, जह्वरिम । ह्वर्ता ॥ **ऋद्धनोस्स्ये ७-२-७०** ऋतो हन्तेश्च स्यस्येट् ॥ ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् ॥ **गुणोऽर्तिसंयोगाद्योः ७-४-२९** अर्तेस्संयोगादेः ऋदन्तस्य च गुणो यकि [3]यादावार्धधातुके लिङि च ॥ ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ॥ श्रु श्रवणे ॥ (१९) **श्रुवः शृ च ३-१-७४** श्रुवः शृ इत्यादेशस्स्यात्, श्नुप्रत्ययश्च ॥ शपोऽपवादः ॥ **सार्वधातुकमपित् १-२-४** अपित्सार्वधातुकं ङिद्वत् ॥ शृणोति, शृणुतः ॥ **हुश्नुवो-**

---

1 'सिजभ्यस्त...' इत्यतः सिजिति, 'झेर्जुस्' इति सूत्रं च अनुवर्तते ॥
2 'इडत्यर्ति...' 'स्तुसुधूञ्भ्यः...' आभ्यां इट् परस्मैपदेषु इत्येतयोरनुवृत्तिः ॥
3 'अयङ् यि...' इत्यादेरनुवृत्तिः ॥

**स्सार्वधातुके** ६-४-८७ हुश्नुवो [1]रनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके ॥ शृण्वन्ति । शृणोषि, शृणुथः, शृणुथ । शृणोमि ॥ **लोपश्चास्यान्यतरस्यां म्वोः** ६-४-१०७ असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः ॥ शृण्वः, शृणुवः, शृण्मः-शृणुमः । शुश्राव, शुश्रुवतुः, शुश्रुवुः । शुश्रोथ, शुश्रुवथुः, शुश्रुव । शुश्राव - शुश्रव, शुश्रुव, शुश्रुम । श्रोता । श्रोष्यति । शृणोतु-शृणुतात्, शृणुतां, शृण्वन्तु ॥ **उतश्च प्रत्ययादसंयोगपूर्वात्** ६-४-१०६ असंयोगपूर्वात् प्रत्ययोतो [2]हेर्लुक् ॥ शृणु-शृणुतात्, शृणुतम्, शृणुत ॥ गुणावादेशौ । शृणवानि, शृणवाव, शृणवाम । अशृणोत्, अशृणुताम्, अशृण्वन् । अशृणोः, अशृणुतम्, अशृणुत । अशृणवम्, अशृण्व-अशृणुव, अशृण्म - अशृणुम । शृणुयात्, शृणुयाताम्, शृणुयुः । शृणुयाः, शृणुयातम्, शृणुयात । शृणुयाम्, शृणुयाव, शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् ॥ गमॢगतौ (२०) **इषुगमियमां छः** ७-३-७७ एषां छःस्याति ॥ गच्छति । जगाम ॥ **गम हन जन खन घसां लोपः क्ङित्यनङि** ६-४-९८ एषामुपधाया लोपोऽजादौ क्ङिति, नत्वङि ॥ जग्मतुः, जग्मुः । जगमिथ - जगन्थ, जग्मथुः, जग्म । जगाम - जगम, जग्मिव, जग्मिम । गन्ता ॥ **गमेरिट् परस्मैपदेषु** ७-२-५८ गमेस्सादेरार्धधातुकस्येट् परस्मैपदेषु ॥ गमिष्यति । गच्छतु । अगच्छत् ।

---

1 'एरनेकाचः...' इत्यस्मादनुवृत्तिः ॥ 2 'चिणोलुक्' 'अतोहेः' आभ्य अनुवृत्तिः ॥

गच्छेत् ॥ गम्यात् ॥ **पुषादिद्युताद्यॢदितः परस्मैपदेषु ३-१-५५**

श्यन्विकरणपुषादेर्द्युतादेर्ॢदितश्च परस्य [1]च्लेरङ् परस्मैपदेषु ॥ 'अनङि' इत्युक्तेर्नोपधालोपः ॥ अगमत् । अगमिष्यत् ॥

॥ इति परस्मैपदिनः ॥

1 'च्लेस्सिच्' इत्यतः च्लेरित्यस्य, 'अस्यतिवक्ति...' इत्यतः अङ् इत्यस्य अनुवृत्तिः ॥

## ॥ अथ आत्मनेपदिनः ॥

---

एध वृद्धौ (१) अनुदात्तेत् ॥ **टित आत्मनेपदानां टेरे ३-४-७९** टितो लस्यात्मनेपदानां टेरेत्वम् ॥ एधते ॥ **आतो ङितः ७-२-८१** अतः परस्य ङितामाकारस्य इय् स्यात् ॥ एधेते, एधन्ते॥ **थासस्से ३-४-८०** टितो लस्य थासस्से स्यात् ॥ एधसे, एधेथे, एधध्वे ॥ 'अतोगुणे' एधे, एधावहे, एधामहे ॥ **इजादेश्च गुरुमतोऽनृच्छः ३-१-३६** इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ॥ **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १-३-६३** आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः ॥ आम् प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदम् ॥ **लिटस्तझयोरेशिरेच् ३-४-८१** लिडादेशयोस्तझयोरेशिरेचौ स्तः ॥ एधां चक्रे, एधां चक्राते, एधां चक्रिरे । एधां चकृषे, एधां चक्राथे ॥ **इणःषीध्वंलुङ्लिटां धोऽङ्गात् ८-३-७८** इणन्तादङ्गात्परेषां षीध्वं लुङ्लिटां धस्य ढः ॥ एधाञ्चकृढ्वे । एधांचक्रे, एधाञ्चकृवहे, एधाञ्चकृमहे । एधाम्बभूव, एधामास । एधिता, एधितारौ, एधितारः ॥ तङादेशानां टेरेत्वं तु न; 'एशिरे'जि त्येकारोच्चारणात् ॥ अतएव 'थासस्से' इति सङ्गच्छते ॥ एधितासे, एधितासाथे ॥ **धि च ८-२-२५** धादौ प्रत्यये [1]सस्य लोपः ॥ एधिताध्वे ॥ **ह एति ७-४-५२** तासस्त्योस्सस्य हस्स्यादेति परे ॥ एधिताहे, एधितास्वहे,

---

1 'संयोगान्तस्ये' त्यतः लोप इति 'रात्सस्ये' त्यतः सस्येति च अनुवर्तते ॥

एधितास्महे । एधिष्यते, एधिष्येते, एधिष्यन्ते, एधिष्यसे, एधिष्येथे, एधिष्यध्वे, एधिष्ये, एधिष्यावहे, एधिष्यामहे ॥ **आमेतः** ३-४-९० लोट एत आम् ॥ एधताम्, एधेताम्, एधन्ताम् ॥ **सवाभ्यां वामौ** ३-४-९१ सवाभ्यां परस्य लोडेतः क्रमाद्वामौ स्तः ॥ एधस्व, एधेथाम्, एधध्वम् ॥ **एत ऐ** ३-४-९३ [1]लोडुत्तमस्य ॥ एधै, एधावहै, एधामहै ॥ 'आटश्च', ऐधत, ऐधेताम्, ऐधन्त । ऐधथाः, ऐधेथाम्, एधध्वम् । ऐधे, ऐधावहि, ऐधामहि ॥ **लिङ[2]स्सीयुट्** ३-४-१०२ लिङ आत्मनेपदस्य ॥ सयोर्लोपः ॥ एधेत, एधेयाताम् ॥ **झस्य रन्** ३-४-१०५ लिङः ॥ एधेरन् । एधेथाः, एधेयाथाम्, एधेध्वम् ॥ **इटोऽत्** ३-४-१०६ लिङादेशस्य ॥ एधेय, एधेवहि, एधेमहि ॥ **सुट् तिथोः** ३-४-१०७ सिङस्तथोस्सुट् ॥ यलोपः आर्धधातुकत्वात्सयोर्लोपो न ॥ एधिषीष्ट, एधिषीयास्तां, एधिषीरन् । एधिषीष्ठाः, एधिषीयास्थां, एधिषीध्वम् । एधिषीय, एधिषीवहि, एधिषीमहि । ऐधिष्ट, ऐधिषाताम् ॥ **आत्मनेपदेष्वनतः** ७-१-५ अकारात्परस्यात्मनेपदस्य [3]झस्य अत् इत्यादेशस्स्यात् ॥ ऐधिषत, ऐधिष्ठाः, ऐधिषाथाम्, ऐधिढ्वम् । ऐधिषि, ऐधिष्वहि, ऐधिष्महि । ऐधिष्यत, ऐधिष्येताम्, ऐधिष्यन्त । ऐधिष्यथाः, ऐधिष्येथाम्, ऐधिष्यध्वम् । ऐधिष्ये, ऐधिष्यावहि, ऐधिष्यामहि ॥ कमु कान्तौ (२) **कमेर्णिङ्** ३-१-३० स्वार्थे ।

---

1 लोडुत्तमस्य एकारस्य ऐस्यात् ॥ 2 सीयुट् आगमः ॥ 3 'झोऽन्तः' इत्यतः झीति 'अदभ्यस्तात्' इत्यतः अत् इति च अनुवर्तते ॥

ङित्वात्तङ् । अनिग्लक्षणत्वान्न वृद्धिनिषेधः ॥ कामयते ॥ **अयामन्ताल्वाय्येत्न्विष्णुषु ६-४-५५** [1]एषु णेरय् ॥कामयांचक्रे, 'आयादय' इति णिङ् वा ॥ चकमे, चकमाते, चकमिरे । चकमिषे, चकमाथे, चकमिध्वे, चकमे, चकमिवहे, चकमिमहे । कामयिता-कमिता । कामयितासे । कामयिष्यते - कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट - कमिषीष्ट ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३-१-४८** ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् कर्त्रर्थे लुङि ॥ कामि+अ+त, इति स्थिते ॥ **णेरनिटि ६-४-५१** अनिडादावार्धधातुके णे [2]र्लोपः । तेन न यण् ॥ **णौ चङ्युपधाया ह्रस्वः ७-४-१** चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः ॥ **चङि ६-१-११** [3]अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे ७-४-९३** चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ॥ **सन्यतः ७-४-७९** अभ्यासस्यात इत् सनि ॥ **दीर्घो लघोः ७-४-९४** लघोरभ्यासस्य दीर्घस्सन्वद्भावविषये ॥ अचीकमत ॥ णिङभावपक्षे ॥ **कमेः च्लेश्चङ्वाच्यः [वा १८३९]** तथा च न सन्वद्भावेत्यदीर्घाः, अचकमत । अकामयिष्यत-अकमिष्यत ॥ अय गतौ ॥ (३) अनुदात्तेत् ॥ आयते ॥

---

1 आम् , अन्त, आलु, आय्य, इत्नु, इष्णु, इत्येतेषु 2 'अतो लोपः' इत्यतः लोपः इत्यनुवर्तते ॥ 3 'एकाचोद्वे प्रथमस्य' इत्यादिपूर्वसूत्रेभ्योऽनुवृत्तिः ॥

**उपसर्गस्यायतौ ८-२-१९** अयतिपरस्य उपसर्गस्य यो [1]रेफ
लत्वं स्यात् ॥ प्लायते - पलायते ॥ **दयायासश्च ३-१-३९**
अय्, आस्, एभ्य आम् लिटि ॥ अयांचक्रे । अयिता ।
ष्यते । अयताम् । आयत । अयेत । अयिषीष्ट ॥ वि
८-३-७९ इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य
अयिषीध्वम् - अयिषीढ्वम् ॥ आयिष्ट, आयिध्वम् - आ
आयिष्यत ॥ द्युत दीप्तौ (४) द्योतते ॥ **द्युतिस्वाप्योस्सम्प्र**
**७-४-६७** अनयोरभ्यासस्य सम्प्रसारणं स्यात् ॥ दि
**द्युद्भ्यो लुङि १-३-९१** द्युतादिभ्यः [2]परस्मैपदं वा
'पुषादी...' त्यङ् परस्मैपदे ॥ अद्युतत् - अद्योतिष्ट । अद्योति
एवं श्वितावर्णे ॥ (५) ञिमिदा स्नेहने ॥ (६) ञिष्विदा
चनयोः ॥ (७) मोहनयोरित्येके ॥ ञिक्ष्विदा चेत्यन्ये ॥ रु
वभिप्रीतौ च ॥ (८) घुट परिवर्तने ॥ (९) शुभ दीप्तौ
क्षुभसञ्चलने ॥ (११) णभ तुभहिंसायाम् ॥ (१२-१
ध्वंसु भ्रंसु अवस्रंसने ॥ (१४-१५-१६) ध्वंसु गतौ च ।
लुङि अङि नलोपः । अस्रसत् - अस्रंसिष्ट ॥ स्रम्भु वि
(१८) वृतु वर्तने (१९) वर्तते ॥ ववृते ॥ वर्तिता ॥ **वृद्**
**सनोः १-३-९२** वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं [3]स्ये स

1 'कृपोरोलः' इत्यतः रः इति लः इति च अनुवर्तते ॥ 2 '
परस्मैपदं' इत्यतः परस्मैपदमिति 'वाक्यषः' इत्यतः वा इति च अ
3 'स्येसनि' 'गमेरिट्' इत्येताभ्यामनुवृत्तिः ॥

**न वृद्भ्यश्चतुर्भ्यः ७-२-५९** वृतु वृधु शृधु स्यन्दूभ्यस्सादेरार्धधातुकस्येण् न स्यात् तङानयोरभावे ॥ वर्त्स्यति-वर्तिष्यते ॥ वर्तताम् । अवर्तत । वर्तेत - वर्तिषीष्ट । अवर्तिष्ट - अवृतत् । अवर्त्स्यत् - अवर्तिष्यत ॥ दद दाने (२०) ददते ॥ **न शस ददवादिगुणानाम् ६-४-१२६** शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य चैत्वा[1]भ्यासलोपौ न ॥ ददते, दददाते, दददिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत, ददिषीष्ट । अददिष्ट । अददिष्यत ॥ त्रपूष् लज्जायाम् ॥ (२१) त्रपते ॥ **तॄ फल भजत्रपश्च ६-४-१२२** एषामत एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च ॥ त्रेपे । त्रपिता-त्रप्ता । त्रपिष्यते, त्रप्स्यते - त्रपताम् ॥ अत्रपत । त्रपेत । त्रपिषीष्ट-त्रप्सीष्ट । अत्रपिष्ट-अत्रप्त । अत्रपिष्यत, अत्रप्स्यत ॥

॥ इत्यात्मनेपदिनः ॥

---

1 'अत एकहल्मध्येऽनादेशादेर्लिटि' 'थलि च सेटि' इत्यतः अनुवृत्तिः ॥

## ॥ अथाजन्ता उभयपदिनः ॥

श्रिञ् सेवायाम् ॥ (१) श्रयति- श्रयते । शिश्राय, शिश्रियतुः । शिश्रिये । श्रयिता ॥ श्रयिष्यति- श्रयिष्यते । श्रयतु - श्रयताम् । अश्रयत् - अश्रयत । श्रयेत् - श्रयेत । श्रीयात् - श्रयिषीष्ट । चङि गुणात्पूर्वमियङ् । अशिश्रियत् - अशिश्रियत । अश्रयिष्यत् - अश्रयिष्यत ॥ भृञ् भरणे ॥ (२) भरति-भरते । बभार, बभ्रतुः, बभ्रुः । बभर्थ । बभृव, बभृम । बभ्रे, बभृषे । भर्ता, भर्तासि-भर्तासे, भरिष्यति - भरिष्यते । भरतु - भरतां । अभरत् - अभरत । भरेत् - भरेत ॥ **रिङ् शयग्लिङ्क्षु ७-४-२८** शे यकि यादावार्धधातुके लिङि ऋतोरिङ् रीङि प्रकृतेरिङ्विधानसामर्थ्याद्दीर्घो न ॥ भ्रियात् ॥ **उश्च १-२-१२** ऋवर्णान्तात्परौ झलादी लिङ्सिचौ तङ्परौ कितौ स्तः ॥ भृषीष्ट, भृषीयास्तां, अभार्षीत् ॥ **ह्रस्वादङ्गात् ८-२-२७** सिचो लोपो झलि ॥ अभृत । अभरिष्यत् - अभरिष्यत ॥ हृञ् हरणे ॥ (३) हरति, हरते, । जहार - जह्रे । जहर्थ ॥ जह्रिव, जह्रिम । जह्रिषे । हर्ता । हरिष्यति, हरिष्यते । हरतु, । हरतां । अहरत्, अहरत । हरेत्, हरेत । ह्रियात्, हृषीष्ट, हृषीयास्तां । अहार्षीत्, अहृत । अहरिष्यत्, अहरिष्यत ॥ धृञ् धारणे, (४) धरति, धरते ॥ णीञ् प्रापणे ॥ (५) नयति, नयते ॥ डुपचष् पाके (६) पचति, पचते । पपाच, पेचिथ-पपक्थ । पेचे । पक्ता ॥ भज सेवायां

(७) भजति, भजते । बभाज, भेजे । भक्ता ॥ भक्ष्यति, भक्ष्यते । अभाक्षीत्, अभक्त, अभक्षातां ॥ यज देवपूजासङ्गतिकरण दानेषु ॥ (८) स्वरितेत् ॥ यजति, यजते ॥ **लिट्यभ्यासस्योभयेषाम् ६-१-१७** वच्यादीनां ग्रह्यादीनां चाभ्यासस्य [1]सम्प्रसारणं लिटि ॥ इयाज ॥ **वचि स्वपि यजादीनां किति ६-१-१५** वचि स्वप्योर्यजादीनां च सम्प्रसारणं किति ॥ ईजतुः, ईजुः ॥ इयजिथ, इयष्ठ । ईजे । यष्टा ॥ **षढोः कस्सि ८-२-४१** षस्य ढस्य च कस्स्यात्सकारे परे ॥ यक्ष्यति, यक्ष्यते । इज्यात्, यक्षीष्ट । अयाक्षीत्, अयष्ट । वह्प्रापणे (९) वहति, वहते । उवाह । ऊहतुः, ऊहुः । उवहिथ ॥ पक्षे घत्वे—**झषस्तथोर्धोऽधः ८-२-४०** झषः परयोस्तथोर्धस्स्यान्न तु दधातेः ॥ **ढो ढे लोपः ८-३-१३** **सहिवहोरोदवर्णस्य ६-३-११२** अनयोरवर्णस्य ओत् स्यात् ॥ ढलोपे सति—उवोढ, ऊहे । वोढा । वक्ष्यति । अवाक्षीत्, अवोढां, अवाक्षुः । अवाक्षीः, अवोढं, अवोढ । अवाक्षं, अवाक्ष्व, अवाक्ष्म । अवोढ, अवक्षाताम्, अवक्षत । अवोढाः, अवक्षाथाम्, अवोढ्वम् । अवक्षि, अवक्ष्वहि, अवक्ष्महि ॥

॥ इति भ्वादिप्रकरणम् ॥

---

1 'ष्यङस्सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवर्तते ॥

## ॥ अथ अदादिप्रकरणम् ॥

---

अद भक्षणे (१) **अदिप्रभृतिभ्यश्शपः २-४-७२** लुक् स्यात् ॥ अत्ति, अत्तः, अदन्ति ॥ अत्सि, अत्थः, अत्थ, अद्मि, अद्वः, अद्मः ॥ **लिट्यन्यतरस्याम् २-४-४०** [1]अदो घसॢ वा स्यात् ॥ जघास ॥ उपधालोपः ॥ घस्य चर्त्वम् ॥ **शासि वसि घसीनां च ८-३-६०** इण्कुभ्यामेषां सस्य षः ॥ जक्षतुः, जक्षुः, जघसिथ, जक्षथुः, जक्ष । जघास-जघस, जक्षिव, जक्षिम ॥ आद, आदतुः, आदुः ॥ **इडत्त्यर्ति व्ययतीनाम् ७-२-६६** अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् ॥ आदिथ । आदिव । अत्ता । अत्स्यति । अत्तु-अत्तात्, अत्ताम्, अदन्तु ॥ **हुझल्भ्यो हेर्धिः ६-४-१०१** अद्धि-अत्तात्, अत्तं, अत्त । अदानि, अदाव, अदाम ॥ **अदस्सर्वेषाम् ७-३-१००** अदोऽपृक्तसार्वधातुकस्याट् स्यात् ॥ आदत्, आत्ताम्, आदन् । आदः, आत्तम्, आत्त । आदम्, आद्व, आद्म । अद्यात् अद्याताम्, अद्युः । अद्यात्, अद्यास्ताम्, अद्यासुः ॥ **लुङ्सनोर्घसॢ २-४-३७** अदः घसॢ स्यात् लुङि सनि च ॥ ऌदित्वात् अङ् ॥ अघसत् । आत्स्यत् ॥ हन हिंसागत्योः ॥ (२) हन्ति ॥ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६-४-३७** अनुनासिकान्तानामेषां लोपः किति ङिति ॥ यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः ॥ तनु क्षणु क्षिणु ऋणु

---

1 'अदोजग्धि...'इत्यतः अद इति 'लुङ्सनोर्घसॢ' इति चानुवर्तते ॥

तृणु घृणु वनु मनु तनोत्यादयः ॥ हतः, घ्नन्ति, हंसि, हथः, हथ । हन्मि, हन्वः, हन्मः ॥ जघान, जघ्नतुः, जघ्नुः ॥ **अभ्यासाच्च ७-३-५५** अभ्यासात्परस्य हन्ते [1]र्हस्य कुत्वम् ॥ जघनिथ-जघन्थ, जघ्नथुः, जघ्न । जघान-जघन, जघ्निव, जघ्निम । हन्ता । हनिष्यति । हन्तु-हतात्, हतां, घ्नन्तु ॥ **हन्तेर्जः ६-४-३६** हौ ॥ **असिद्धवदत्राभात् ६-४-२२** इत ऊर्ध्वमापादसमाप्तेराभीयम् ॥ समानाश्रये तस्मिन् कर्तव्ये तदसिद्धम् ॥ इति जस्यासिद्धत्वान्नहेर्लुक् ॥ जहि-हतात्, हतं, हत । हनानि, हनाव, हनाम । अहन्, अहताम्, अघ्नन् । अहन्, अहतं, अहत । अहनम्, अहन्व, अहन्म । हन्यात् ॥ **आर्धधातुके २-४-३५** इत्यधिकृत्य ॥ **हनो वध लिङि २-४-४२ लुङि च २-४-४३** वधादेशोऽदन्तः ॥ आर्धधातुके इति विषयसप्तमी, तेन आर्धधातुकोपदेशे अकारान्तत्वात् अतो लोपः । वध्यात्, वध्यास्ताम् । अवधीत् । अहनिष्यत् । युमिश्रणामिश्रणयोः ॥ (३) **उतो वृद्धिर्लुकि हलि ७-३-८९** लुग्विषये उतो वृद्धिः [2]पिति हलादौ सार्वधातुके नत्वभ्यस्तस्य ॥ यौति, युतः, युवन्ति । यौषि, युथः, युथ । यौमि, युवः, युमः । युयाव-युयविथ । युयाव-युयव, युयविव । यविता । यविष्यति । यौतु-युतात् । युहि । अयौत्, अयुताम्, अयुवन् । युयात् ॥ इह उतो वृद्धिर्न; भाष्ये—'पिच्चङिन्नङिच्चपिन्ने'ति व्याख्यानात् । युयाताम्,

---

1 'चजोः कु...' इत्यतः कुः इति, 'होहन्तेः...' इत्यतः हः हन्तेः इति चानुवर्तते ॥ 2 'नाभ्यस्तस्याचिपितिसार्वधातुके' इति सूत्रमनुवर्तते ॥

युयुः । यायात्, यायास्ताम्, यायासुः । अयावीत् । अयविष्यत् ॥ एवं णु स्तुतौ, टुक्षुशब्दे, क्ष्णु तेजने, ष्णु प्रस्रवणे । या प्रापणे (४) याति, यातः, यान्ति । प्रणियाति । ययौ । युयिथ-ययाथ, ययिव । याता । यास्यति । यातु । अयात् । अयाताम् ॥ **लङश्शाकटायनस्यैव ३-४-१११** अदन्ता[1]ल्लङो झेर्जुस्स्यात् । अयुः-आयन् । यायात् यायाताम्, यायुः । यायात्, यायास्ताम्, यायासुः । अयासीत् । अयास्यत् । एवं वा गति [2]गन्धनयोः (५) भा दीप्तौ (६) ष्णा शौचे (७) श्रा पाके (८) द्रा कुत्सायां गतौ (९) प्सा भक्षणे (१०) रा दाने (११) ला आदाने (१२) दाप् लवने (१३) पा रक्षणे (१४) ख्या प्रकथने (१५) अयं सार्वधातुक एव प्रयोक्तव्यः। विद्ज्ञाने (१६) ॥ **विदो लटो वा ३-४-८३** वेत्तेर्लटः परस्मैपदानां णलादयो वा । वेद, विदतुः विदुः । वेत्थ, विदथुः, विद । वेद, विद्व विद्म । पक्षे—वेत्ति, वित्तः, विदन्ति । **उषविदजागृभ्योऽन्यतरस्याम् ३-१-३८** एभ्यो लिट्याम्वा । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदांचकार-विवेद । विवेदिथ । विविदिव । वेदिता । वेदिष्यति ॥ **विदांकुर्वन्त्वित्यन्यतरस्याम् ३-१-४१** वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च निपात्यते । पुरुषवचने न विवक्षिते ॥ **तनादिकृञ्भ्य उः ३-१-७९** शपोऽपवादः ॥ विदां करोतु-वेत्तु ॥ **अत उत्सार्वधातुके ६-४-११०** उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदांकुरुतात्,

---

1 'आतः' इति पूर्वसूत्रमनुवर्तते ॥ 2 गन्धनं नाम सूचनम् ॥

विदांकुरुताम्, विदांकुर्वंतु । विदांकुरु । विदांकरवाणि । अवेत्, अवित्ताम्, अविदुः ॥ **दश्च ८-२-७५** धातोर्दस्य पदान्तस्य सिपि रुर्वा ॥ अवेः-अवेत् । विद्यात्, विद्याताम्, विद्यास्ताम् । अवेदीत् । अवेदिष्यत् । अस भुवि (१७) अस्ति, ॥ **श्नसोरल्लोपः ६-४-१११** श्नस्यास्तेश्चातो लोपस्सार्वधातुके क्ङिति । स्तः, सन्ति । असि, स्थः, स्थ । अस्मि, स्वः, स्मः ॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८-३-८७** उपसर्गेणः प्रादुसश्चास्तेस्सस्य [1]षो यकारेऽचि च परे । निष्ष्यात् । प्रादुष्ष्यात् । निष्षन्ति, प्रादुष्षन्ति । यच्परः किम्? अभिस्तः ॥ **अस्तेर्भूः २-४-५२** आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु-स्तात्, स्तां, सन्तु । 'हेर्धिः' **घ्वसोरेद्धावभ्यासलोपश्च ६-४-११९** घोरस्तेश्चैत्वं स्यात् हौ परे अभ्यासलोपश्च । [2]एधि-स्तात्, स्तं, स्त । असानि, असाव, असाम ॥ ईट्, आसीत्, आस्ताम्, आसन् । स्यात्-स्याताम्, स्युः । भूयात् । अभूत् । अभविष्यत् । इण् गतौ (१८) एति, इतः ॥ **इणो यण् ६-४-८१** अजादौ अप्रत्यये परे । यन्ति ॥ **अभ्यासस्यासवर्णे ६-४-७८** [3]इ उवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ॥ **दीर्घ इणः किति ७-४-६९** इणोऽभ्यासस्य दीर्घः किति लिटि । ईयतुः, ईयुः । इययिथ-इयेथ । एता । एष्यति । एतु-इतात् । इहि । ऐत्,

---

1 'अपदान्तस्य मूर्धन्यः' इत्यतः मूर्धन्य इत्यनुवर्तते ॥ 2 एत्वस्य असिद्धत्वात् 'हेर्धिः' श्नसो' रित्यल्लोपः ॥ तातङ्पक्षे एत्वं न; परेण तातङा बाधात् ॥ 3 'अचिश्नु...'इत्यतः 'य्वोरियङुवङौ' इत्यनुवर्तते ॥

ऐताम्, आयन् । इयात्, ईयात् ॥ **एतेर्लिङि ७-४-२४** [1]उपसर्गात्परस्येणोऽणो ह्रस्व आर्धधातुके किति लिङि । निरियात् ॥ (प) **उभयत आश्रयणे** [2]**नान्तादिवत्** । अभीयात् । अणः किम्? समेयात्॥ **इणो गा लुङि २-४-४५** 'गाति स्थे'ति सिचो लुक् । अगात् । ऐष्यत् । शीङ् स्वप्ने । (१९) **शीङस्सार्वधातुके गुणः ७-४-२१** शेते-शयाते ॥ **शीङो रुट् ७-१-६** शीङ्परस्य [3]झादेशस्यातो रुट् । शेरते । शेषे । शयाथे, शेध्वे, शये, शेवहे । शेमहे । शिश्ये, शिश्याते, शिश्यिरे । शयिता । शयिष्यते । शेताम्, शयाताम्, शेरताम् । अशेत । अशयाताम्, अशेरत । शयीत, शयीयाताम्, शयीरन् । शयिषीष्ट । शयिषीढ्वम्-शयिषीध्वं । अशयिष्ट । अशयिढ्वम्-अशयिध्वम् अशयिष्यत । इङ् अध्ययने । (२०) इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते, अधीयाते, अधीयते ॥ **गाङ् लिटि २-४-४९** [4]इङः । अधिजगे । अध्येता । अध्येष्यते । अधीताम्, अधीयाताम् अधीयताम् । अधीष्व, अधीयाथाम्, अधीध्वम् । अध्ययै, अध्यावहै, अध्ययामहै । अध्यैत, अध्यैयाताम्, अध्यैयत । अध्यैथाः अध्यैयाथाम्, अध्यैध्वम् । अध्यैयि, अध्यैवहि । अध्यैमहि, अधीयीत, अधीयीयाताम्, अधीयीरन् । अध्येषीष्ट ॥ **विभाषा लुङ्लृङोः २-४-५०** इङो गाङ् वा स्यात् । **गाङ्कुटादिभ्योऽञ्णिन्ङित् १-२-१** गाङादेशात्कुटादिभ्यश्चाञ्णितः प्रत्यया ङितस्स्युः ।

1 'उपसर्गाद्ध्रस्व' इति पूर्वसूत्रमनुवर्तते ॥ 2 तेन 'एतेर्लिङि' इत्यस्य प्राप्तिः ॥ 3 'झोन्तः' इत्यतः झ इति 'अदभ्यस्तात्, इत्यतः अत् इति चानुवर्तते ॥ तस्य षष्ठ्यन्तत्वेन विपरिणामः 4 'इङश्च' इति सूत्रमनुवर्तते ॥

**घुमास्थागापाजहातिसां हलि ६-४-६६** एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट-अध्यैष्ट । अध्यगीष्यत-अध्यैष्यत । दुह प्रपूरणे (२१) स्वरितेत् । दोग्धि, दुग्धः, दुहन्ति । धोक्षि । दुग्धे, दुहाते, दुहते । धुक्षे, दुहाथे, धुग्ध्वे । दुहे, दुह्वहे, दुह्महे । दुदोह, दुदुहे । दोग्धा । धोक्ष्यति, धोक्ष्यते । दोग्धु-दुग्धात्, दुग्धाम्, दुहन्तु । दुग्धि-दुग्धात्, दुग्धं, दुग्ध । दोहानि । दुग्धाम्, दुहाताम्, दुहताम् । धुक्ष्व, दुहाथाम्, धुग्ध्वम् । दोहै, दोहावहै, दोहामहै । अधोक्-अधोग्, अदुग्धाम्, अदुहन् । अदोहम् । अदुग्ध, अदुहाताम्, अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत ॥ **लिङ्सिचावात्मनेपदेषु १-२-११** इकसमीपाद्धलः परौ लिङ्सिचौ । कित्स्तस्तङि[1] । धुक्षीष्ट । धुक्षीध्वम् ॥ **शल इगुपधादनिटः क्सः ३-१-४५** इगुपधो यश्शलन्तस्तस्मादनिटः च्लेः क्सादेशः । अधुक्षत् ॥ **लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये ७-३-७३** एषां क्सस्य लुग्वा दन्त्ये तङि । अदुग्ध-अधुक्षत॥ **क्सस्याचि ७-३-७२** अजादौ तङि क्सस्य लोपः । अधुक्षाताम्, अधुक्षन्त । अदुग्धाः-अधुक्षथाः, अधुक्षाथाम्, अधुग्ध्वं-अधुक्षध्वम् । अधुक्षि, अदुह्वहि-अधुक्षावहि, अदुह्महि-अधुक्षामहि । अधोक्ष्यत । एवं दिह उपचये (२२) प्राणि- देग्धि । लिह आस्वादने । (२३) लेढि, लीढः, लिहन्ति । लेक्षि । लीढे, लिहाते, लिहते । लिक्षे, लिहाथे । लिलेह, लिलिहे । लीढासि, लीढासे । लेक्ष्यति, लेक्ष्यते । लेढु-लीढात्, लीढाम्, लिहन्तु ।

---

1 'असंयोगाल्लिट् कित्' इत्यतः किदित्यनुवर्तते ॥

लीढि । लेहानि । लीढां । लिक्ष्व, लीढ्वं । अलेट्-अलेड्, अलिक्षत्-अलिक्षत । अलीढ । अलेक्ष्यत्, अलेक्ष्यत । ब्रूञ् व्यक्तायां वाचि, (२४) अनुदात्तः, उभयतोभाषः ॥ **ब्रुवः पञ्चानामादित आहो ब्रुवः ३-४-८४** ब्रुवो [1]लटस्तिबादीनां. पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह, आहतुः, आहुः ॥ **आहस्थः ८-२-३५** झलि । चर्त्वम् । आत्थ, आहथुः ॥ **ब्रुव ईट् ७-३-९३** ब्रुवः परस्य हलादेः पित ईट् । ब्रवीति, ब्रूतः, ब्रुवन्ति । ब्रवीषि, ब्रूथ । ब्रूवः । ब्रूते, ब्रुवाते, ब्रुवते । ब्रूषे । ब्रुवे, ब्रूवहे ॥ **ब्रुवो वचिः २-४-५३** आर्धधातुके । उवाच, ऊचतुः, ऊचुः । उवचिथ-उवक्थ । ऊचिव । ऊचे । वक्ता । वक्ष्यति, वक्ष्यते । ब्रवीतु-ब्रूतात्, ब्रूताम्, ब्रुवन्तु । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रवै । अब्रवीत्, अब्रूत । अब्रवम् । ब्रूयात्, ब्रुवीत । उच्यात् । वक्षिष्ट ॥ **अस्यतिवक्तिख्यातिभ्योऽङ् ३-१-५२** एभ्यश्च्लेरङ् स्यात् ॥ **वच उम् ७-४-२०** अङिपरे । अवोचत्, अवोचत । अवक्ष्यत्, अवक्ष्यत । 'चर्करीतं च' चर्करीतमिति यङ्लुगन्तं तददादौ बोध्यम् । ऊर्णुञ् आच्छादने । (२५) उदात्तः ॥ **ऊर्णोतेर्विभाषा ७-३-९०** [2]वृद्धिर्हलादौ पिति सार्वधातुके । ऊर्णौति-ऊर्णोति, ऊर्णुतः, ऊर्णुवन्ति । ऊर्णुते, ऊर्णुवाते, ऊर्णुवते ॥ **ऊर्णोतेराम्नेति वाच्यम् (वा १८०२)** **नन्द्राः संयोगादयः ६-१-३** अचः परास्संयोगादयो नदरा द्विर्न-

1 'विदो लटो वा' इत्यतः लटो वा इत्यनुवर्तते ॥ 2 'नाभ्यस्तस्य...' इत्यत पितीति, 'उतोवृद्धिः...' इत्यतः हलीति चानुवर्तते ॥

भवन्ति । नुशब्दस्य द्वित्वम् । ऊर्णुनाव-ऊर्णुनुवतुः, ऊर्णुनुवुः । **विभाषोर्णोः १-२-३** इडादिप्रत्ययो ङिद्वा स्यात् । ऊर्णुनुविथ-ऊर्णुनविथ । ऊर्णुनुवे, ऊर्णुनुविषे, ऊर्णुनुविढ्वे-(ध्वे) । ऊर्णुनुविवहे । ऊर्णुविता-ऊर्णविता । ऊर्णुविष्यति । (ते) ऊर्णविष्यति (ते)-ऊर्णौतु-ऊर्णोतु । ऊर्णवानि । ऊर्णुतां । ऊर्णुष्व । ऊर्णवै ॥ **गुणाऽपृक्ते ७-३-९१** ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत्, और्णुतां । और्णोः । और्णवं, और्णुव । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णुयात्, ऊर्णुविषीष्ट-ऊर्णविषीष्ट ॥ **ऊर्णोतेर्विभाषा ७-२-६** इडादौ परस्मैपदे सिचि वा वृद्धिः । पक्षे गुणः और्णावीत्-और्णवीत्-और्णुवीत्, और्णाविष्टाम्, और्णुविष्टाम् । और्णविष्टम्, और्णाविष्ट-और्णुविष्ट । और्णुविष्यत-(त्) और्णविष्यत (त्) ॥

॥ इत्यदादिप्रकरणम् ॥

## ॥ अथ जुहोत्यादिप्रकरणम् ॥

हु दानादनयोः, (१) अनुदात्तः, परस्मैभाषः । जुहोत्य दिभ्यः श्लुः २-४-७५ शपः ॥ श्लौ ६-१-१० धातोर्द्वे स्तः जुहोति, जहुतः ॥ अदभ्यस्तात् ७-१-४ झस्य अत् । 'हु श्नुवो रिति यण् । जुह्वति । भी ह्री भृहुवां श्लुवच्च ३-१-३६ एभ्य लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवांचकार - जुहा जुहविथ-जुहोथ । जुहुविव । होता । होष्यति । जुहोतु-जुहुतात जुहुताम्, जुह्वतु । जुहुधि । जुहवानि । अजुहोत्, अजुहुताम् जुसि च ७-३-८३ इगन्ताङ्गस्य [1]गुणोऽजादौ जुसि । अजुहवुः जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् । ञिभी भये । (२ बिभेति ॥ भियोऽन्यतरस्याम् ६-४-११५ इस्स्याद्धलादौ कि सार्वधातुके । बिभितः-बिभीतः, बिभ्यति । बिभयांचकार-बिभाय बिभयिथ - बिभेथ । बिभ्यव, बिभ्यम । भेता । भेष्यति । बिभेतु बिभितात् - बिभीतात् । बिभिहि-बिभीहि । अबिभेत्, अबिभयुः बिभियात्-बिभीयात्, भीयात् । अभैषीत् । अभेष्यत् । ह्री लज्जा (३) जिह्रेति, जिह्रीतः, जिह्रियति । जिह्रियांचकार - जिह्राय ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रीयात् । ह्रीयात् । अ षीत् । अह्रेष्यत् । पॄ पालनपूरणयोः । उदात्तः, प-भा (४) ॥ अ पिपर्त्योश्च ७-४-७७ अभ्यासस्य इस्स्यात्श्लौ । पिपर्ति ॥ उदोष्ठ

---

1 'मिदेर्गुणः' इत्यतः गुण इति, 'क्सस्याचि' इत्यतः अचि इति च अनुवर्तं

**पूर्वस्य ७-१-१०२** अङ्गावयवौष्ट्यपूर्वो य ऋत् तदन्तस्याङ्गस्य उः ॥ **हलि च ८-२-७७** [1]रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि। पिपूर्तः, पिपुरति। पपार ॥ **शॄ दॄ प्रां ह्रस्वो वा ७-४-१२** किति लिटि। पप्रतुः, पप्रुः ॥ **ऋच्छत्यॄताम् ७-४-११** तौदादिकऋच्छेः ऋधातोः ॠदन्तानां च गुणो लिटि। पपरतुः, पपरुः। पपरिथ-पप्रिव ॥ **वॄतो वा ७-२-३८** वृङ् वृञ्भ्या मॄदन्ताच्चेटो दीर्घो वा स्यान्नतु लिटि। परिता-परीता। परिष्यति-परीष्यति। पिपर्तु-पिपरतु। पिपूर्हि। अपिपः, अपिपूर्ताम्, अपिपरुः, पिपूर्यात्, पूर्यात्। अपारीत् ॥ **सिचि च परस्मैपदेषु ७-२-४०** अत्रेटो न दीर्घः। अपारिष्टाम्। अपरिष्यत् - अपरीष्यत्। ओहाक् त्यागे (५) अनुदात्तः, प-भा। जहाति ॥ **जहातेश्च ६-४-११६** इद्वा स्याद्धलादौ क्ङिति सार्वधातुके। जहितः ॥ **ईहल्यघोः ६-४-११३** श्नाभ्यस्तयोरात ईत्सार्वधातुके क्ङिति। हलि, नतु[2]घोः। जहीतः। **श्नाभ्यस्तयोरातः ६-४-११२** लोपः क्ङिति। जहति। जहौ। हाता। हास्यति। जहातु-जहितात्-जहीतात्। **आ च हौ ६-४-११७** जहातेः चा दिदीतौ। जहाहि-जहिहि, जहीहि। अजहात्, अजहुः ॥ **लोपो यि ६-४-११८** जहातेरालोपो यादौ सार्वधातुके। जह्यात्। 'एर्लिङि' हेयात्। अहासीत्। अहास्यत्। माङ् माने शब्दे च (६) अनु, आ-भा ॥ **भृञामित् ७-४-७६** भृञ् माङ् ओहाङ्

---

1 'वोरुपधाया' इत्यनुवर्तते ॥ 2 'दादाध्वदाप्' इति विहितघुसंज्ञकस्येत्यर्थः ॥

एषामभ्यासस्येत्स्याच्श्लौ । मिमीते, मिमाते, मिमते । ममे । माता । मास्यते । मिमीताम् । अमिमीत । मिमीत, मासीष्ट । अमास्त-अमास्यत । ओहाङ् गतौ । (७) जिहीते, जिहाते, जिहते । जहे । हाता । हास्यते । जिहीताम् । अजिहीत । जहीत । हासीष्ट । अहास्त । अहास्यत । डुभृञ् धारणपोषणयोः । (८) अनु, उ-भा । बिभर्ति, बिभृतः, बिभ्रति । बिभृते, बिभ्राते, बिभ्रते । बिभरांचकार-बभार, बभर्थ, बभृव । बिभरांचक्रे-बभ्रे । भर्ता । भरिष्यति-भरिष्यते । बिभर्तु । बिभराणि । बिभृताम् । अबिभः, अबिभृताम्, अबिभरुः । अबिभृत । बिभृयात्, बिभ्रीत । भ्रियात्, भृषीष्ट । अभार्षीत्, अभृत । अभरिष्यत्, अभरिष्यत । डुदाञ् दाने, (९) ददाति, दत्तः, ददति । दत्ते, ददाते, ददते । ददौ, ददे । दाता । दास्यति-दास्यते, ददातु ॥ **दाधाघ्वदाप्** १-१-२० दारूपा धारूपाश्च धातवो घुसंज्ञास्स्युर्दाप्दैपौ विना । 'घ्वसो' रित्येत्वम्, देहि । दत्ताम् । अददात्, अदत्त । दद्यात्, ददीत । देयात्, दासीष्ट । अदात्, अदाताम्, अदुः । **स्थाघ्वोरिच्च** १-२-१७ अनयोरिदन्तादेशस्स च किदात्मनेपदे । अदित । अदास्यत्, अदास्यत । डुधाञ् धारणपोषणयोः (१०) दधाति ॥ **दधस्तथोश्च** ८-२-३८ द्विरुक्तस्य झषन्तस्य धाञो [1]बशो भष् तथोः स्ध्वोश्च परतः । धत्तः, दधति । दधासि, धत्थः । धत्ते, दधाते, दधते । धत्से, धद्ध्वे । घ्वसो रेद्धावभ्यासलोपश्च धेहि । अदधात्, अधत्त । दध्यात् । दधित ।

---

1 'एकाचोबशो...' इति पूर्वसूत्रमनुवर्तते ॥

धेयात्, धासीष्ट । अधात्, अधित । अधास्यत्, अधास्यत । णिजि शौचपोषणयोः (११) इर इत्संज्ञावाच्या (वा ८३५) **णिजां त्रयाणां गुणः श्लौ ७-४-७५** णिजि विजि विषामभ्यासस्य गुणः श्लौ । नेनेक्ति, नेनिक्तः, नेनिजति । नेनिक्ते । निनेज, निनिजे, नेक्ता । नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥ **नाभ्यस्तस्याचि पिति सार्वधातुके ७-३-८७** लघूपधगुणो न । नेनिजानि, नेनिक्ताम् । अनेनेक्, अनेनिक्ताम्, अनेनिजुः । अनेनिजम्, अनेनिक्त । नेनिज्यात्-निज्यात्, नेनिजीत-निक्षीष्ट ॥ **इरितो वा ३-१-५७** इरितो धातोश्च्लेरङ्वा परस्मैपदेषु । अनिजत् - अनैक्षीत् - अनिक्त । अनेक्ष्यत्, अनेक्ष्यत ॥

॥ इति जुहोत्यादिप्रकरणम् ॥

## ॥ अथ दिवादिप्रकरणम् ॥

---

दिवु क्रीडा विजिगीषा व्यवहार द्युतिस्तुति मोदमदस्वप्रकान्तिगतिषु (१) उदात्तः, प-भा ॥

**दिवादिभ्यः श्यन् ३-१-६९** शपोऽपवादः । 'हलि' चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । एवं षिवु तन्तुसन्ताने । (२) नृती गात्रविक्षेपे । (३) नृत्यति । ननर्त । नर्तिता ॥ **सेऽसिचि कृतचृतछृदतृदनृतः ८-२-५७** एभ्यः सिज् भिन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति-नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् । अनर्तिष्यत् - अनर्त्स्यत् । त्रसी उद्वेगे । (४) 'वाभ्रा' शेति श्यन्वा, त्रस्यति - त्रसति, तत्रास ॥ **वा जॄ भ्रमु त्रसाम् ६-४-१२४** एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः-तत्रसतुः । त्रेसिथ-तत्रसिथ । त्रसिता । शो तनूकरणे, (५) अनुदात्तः, प-भा ॥ **ओतश्श्यनि ७-३-७१** लोपस्स्यात् श्यनि । श्यति, श्यतः, श्यन्ति । शशौ, शशतुः, शशुः । शशिथ - शशाथ । शाता । शास्यति । श्येत् , शायात् ॥ **विभाषा घ्राधेट् शाच्छासः २-४-७८** एभ्यस्सिचो लुग्वा परस्मैपदेषु । अशात् , अशाताम् , अशुः ॥ **यम रम नमातां सक्च ७-२-७३** एषां सगेभ्यस्सिच इट् परस्मैपदेषु । इट् सकौ । अशासीत् , अशासिष्टाम् । छो छेदने (६) छ्यति । षो अन्तकर्मणि

(७) स्यति । ससौ । दो अवखण्डने (८) द्यति । ददौ । देयात् । अदात् । व्यध ताडने (९) ॥ **ग्रहि ज्यावयिव्यधिवष्टिविचति वृश्चतिपृच्छतिभृज्जतीनां ङिति च ६-१-१६** एषां सम्प्रसारणं स्यात् किति ङिति च । विध्यति । विव्याध, विविधतुः, विविधुः । विव्यधिथ - विव्यद्ध । व्यद्धा । व्यत्स्यति, विध्येत्, विध्यात् । अव्यात्सीत्, अव्याद्धाम् ॥ पुष पुष्टौ (१०) । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । 'पुषादी'त्यङ् । अपुषत् । शुषशोषणे (११) शुष्यति । शुशोष । अशुषत् । एवं तुष प्रीतौ, प्रीतिस्तृप्तिः । दुष वैकृत्ये, वैकृत्यं विकृतिः । णश अदर्शने (१२) अनुदात्तः । उदात्तेत्, प-भा । नश्यति । ननाश । नेशतुः ॥ [1]**रधादिभ्यश्च ७-२-४५** [2]वलाद्यार्धधातुकस्य वेट् । नेशिथ ॥ **मस्जिनशोर्झलि ६-१-६०** नुम् । ननंष्ठ । नेशिव-नेश्व, नेशिम-नेश्म । नशिता-नंष्टा । नशिष्यति-नंक्ष्यति । नश्यतु । अनश्यत् । नश्येत्, नश्यात् । अनशत् । षूङ् प्राणिप्रसवे (१३) उदात्तः, आ-भा । सूयते । सुषुवे । क्रादिनियमादिट् । सुषुविषे, सुषुविवहे, सुषुविमहे । सोता-सविता । सविषीष्ट-सोषीष्ट । असोष्ट-असविष्ट । दूङ् परितापे (१४) परितापः खेदः । दूयते । दीङ् क्षये (१५) अनुदात्तः । दीयते ॥ **दीङो युडचि क्ङिति ६-४-६३** दीङः परस्याजादेः क्ङिदार्धधातुकस्य युट् ॥ ***वुग्युटावुवङ्यणोस्सिद्धौ वक्तव्यौ [वा ४०६२]** दिदीये ॥

1 रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एते रधादयः ॥ 2 'आर्धधातुकस्येड्वलादेः' इत्यनुवर्तते ॥

**मीनाति मिनोति दीङां ल्यपि च ६-१-५०** एषामात्वं ल्यपि चादशित्येज्निमित्ते । दाता । दास्यति ॥ **स्थाध्वोरिच्च दीङ प्रतिषेधः [वा]** अदास्त । डीङ् विहायसा गतौ (१६)। उदात्तः डीयते । डिड्ये । डयिता । पीङ् पाने (१७) अनुदात्तः । पीयते पेता । अपेष्ट । माङ् माने (१८) मायते । ममे । जनी प्रादुर्भावे (१९) अनुदात्तेत्, उदात्तः उत्पत्तिरभिव्यक्तिर्वा ॥ [1]**ज्ञाजनोर्जा ७-३-७९** शिति । जायते । जज्ञे । जज्ञिषे, जज्ञिवहे । जनिता जनिष्यते ॥ **दीप जन बुध पूरि तायिप्यायिभ्योऽन्यतरस्याम् ३-१-६१** एभ्यः च्लेः चिण्वा एकवचने तशब्दे परे । **चिणो लुक् ६-४-१०४** चिणः परस्य लुक् ॥ **जनिवध्योश्च ७-३-३५** अनयोर्न वृद्धि[2]श्चिणि ञ्णिति कृति च । अजनि-अजनिष्ट । दिपी दीप्तौ (२०) दीप्यते । दिदीपे । दीपिता । अदीपि - अदीपिष्ट । पद गतौ (२१) पद्यते । पेदे । पत्ता । पत्सीष्ट ॥ **चिण् ते पदः ३-१-६०** पदः च्लेः चिण् ते परे । अपादि, अपत्साताम्, अपत्सत । खिद दैन्ये-विद सत्तायाम् (२२) विद्यते । वेत्ता । वित्सीष्ट । अवित्त बुध अवगमने (२३) बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट अबोधि-अबुद्ध, अभुत्साताम् । युध सम्प्रहारे (२४) । युध्यते युयुधे । योद्धा । अयुद्ध । सृज विसर्गे (२५) सृज्यते । ससृजिषे । **सृजि दृशोर्झल्यमकिति ६-१-५८** अनयोरम् झलादावकिति स्रष्टा । स्रक्ष्यते । सृक्षीष्ट । असृष्ट, असृक्षाताम् । मृष तितिक्षायाम्

1 ज्ञाधातोः जनीधातोश्च ॥ 2 'अतोयुक् चिण् कृतोः' इत्यनुवर्तते ॥

(२६) उदात्तः । स्वरितेत्, उ-भा । तितिक्षा क्षमा । मृष्यति, मृष्यते, ममर्ष । ममर्षिथ । ममृषिषे । मर्षितासि, मर्षितासे । मर्षिष्यति, मर्षिष्यते । अमर्षिष्ट, अमृषत् । णह् बन्धने (२७) अनुदात्तः । नह्यति, नह्यते । ननाह, ननद्ध । नेहिथ । नेहे । नेद्धा । नत्स्यति-नत्स्यते । अनात्सीत् - अनद्ध ॥

॥ इति दिवादिप्रकरणम् ॥

## ॥ अथ स्वादिप्रकरणम् ॥

षुञ् अभिषवे । (१) अनुदात्तः, उ - भा ॥ **स्वादिभ्यः श्नु ३-१-७३** शपोऽपवादः । सुनोति, सुनुतः, 'हुश्नुवो' रिति यण् सुन्वन्ति । सुन्वः-सुनुवः । सुनुते, सुन्वाते, सुन्वते । सुन्वहे - सुनुवहे । सुषाव, सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् सूयात् ॥ **स्तु सुधूञ्भ्यः परस्मैपदेषु ७-२-२७** एभ्यस्सिच[1]इट् । असावीत् , असोष्ट । चिञ् चयने (२) चिनोति-चिनुते । **विभाषा चेः ७-३-५८** [2]अभ्यासाच्चेः कुत्वं वा सनि लिटि च चिकाय-चिचाय, चिक्ये-चिच्ये । अचैषीत् , अचेष्ट । स्तृञ् आच्छादने (३) । स्तृणोति, स्तृणुते ॥ **शर्पूर्वाः खयः ७-४-६१** अभ्यासस्य शर्पूर्वाः खयश्शिष्यन्तेऽन्ये हलो लुप्यन्ते । तस्तार, तस्तरतुः तस्तरे । 'गुणो'र्तीति गुणः । स्तर्यात् ॥ **ऋतश्च संयोगादेः ७-२-४३** ऋदन्तात्संयोगादेर्लिङ् सिचोरिड्वा । स्तरिषीष्ट-स्तृषीष्ट । अस्तरिष्ट अस्तृत । धूञ् कम्पने (४) धूनोति, धूनुते । दुधाव । 'स्वरती'ति वेट्, दुधविथ-दुधोथ ॥ **श्र्युकः किति ७-२-११** श्रिञ एकाच उगन्ताच्च गित्कितो [3]रिण् न । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमा

---

1 'इड्यत्यर्ति...इत्यस्मात् इट् इत्यनुवर्तते ॥ 2 'चजोः कु...' 'अभ्यासाच्च' 'सन् लिटोर्जेः' इति सूत्रेभ्योऽनुवृत्तिः ॥ 3 'नेड्वशिकृति' इत्यनुवर्तते ॥

न्नित्यमिट्। दुधुविव। दुधुवे। अधावीत्, अधविष्ट-अधोष्ट। अधविष्यत् - अधोष्यत्। अधविष्यताम्-अधोष्यतां। अधविष्यत-अधोष्यत॥

॥ इति स्वादिप्रकरणम्॥

## ॥ अथ तुदादिप्रकरणम् ॥

तुद व्यथने (१) । अनुदात्ताः । स्वरितेतः । उ-भा ॥ **तुदादिभ्यश्शः ३-१-७७** शपोऽपवादः । तुदति, तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त ॥ णुद प्रेरणे (२) नुदति, नुदते । नुनोद, नुनुदे । नोत्ता । भ्रस्जपाके (३) 'ग्रहिज्ये'ति सम्प्रसारणम्, सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति, भृज्जते ॥ **भ्रस्जो रोपधयोरमन्यतरस्याम् ६-४-४७** भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो वा आर्धधातुके । मित्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज, बभर्जतुः, बभर्जिथ-बभर्ष्ठ । बभ्रज्ज, बभ्रज्जतुः, बभ्रज्जिथ । 'स्को'रिति सलोपः, 'व्रश्चे'ति षः, बभ्रष्ठ । बभर्जे-बभ्रज्जे । भर्ष्टा-भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन । भृज्ज्यात्, भृज्ज्यास्ताम्, भृज्ज्यासुः । भर्क्षीष्ट-भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत्, अभर्ष्ट - अभ्रष्ट । कृष विलेखने (४) कृषति, कृषते । चकर्ष, चकृषे ॥ **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६-१-५९** उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा झलादावकिति । क्रष्टा-कर्ष्टा । कृष्यात्, कृक्षीष्ट ॥ *स्पृशमृशकृषतृपदृपांच्लेस्सिज्वावाच्यः [वा १८२६] सिचयम्वा । अक्राक्षीत्-अकार्क्षीत् । पक्षे क्सः, अकृक्षत् । ताङि कित्वादम्न । अकृष्ट, अकृक्षाताम्, अकृक्षन्त । मिलसङ्गमे (५) उदात्तः । मिलति, मिलते । मिमेल । मेलिता । अमेलीत् । मुचॢ

मोचने (६) अनुदात्तः ॥ उ-भा ॥ **शे मुचादीनाम् ७-१-५९** मुच् लिप् विद् लुप् सिच् कृत् खिद् पिशां नुम् । मुञ्चति, मुञ्चते । मोक्ता । मुच्यात्, मुक्षीष्ट । अमुचत्, अमुक्त, अमुक्षाताम्, अमुक्षत । लुप् छेदने (७) लुम्पति, लुम्पते । लोप्ता । अलुपत्, अलुप्त । विद्लृ लाभे (८) विन्दति, विन्दते । विवेद, विविदे । व्याघ्रभूतिमते सेट्, वेदिता । भाष्यमतेऽनिट्, परिवेत्ता । परिवर्जने । षिच क्षरणे (९) सिञ्चति, सिञ्चते ॥ **लिपि सिचि ह्वश्च ३-१-५३** एभ्यश्च्लेरङ् । असिचत् ॥ **आत्मनेपदेष्वन्यतरस्याम् ३-१-५४** लिपि सिचि ह्वः परस्य च्लेरङ्वा तङि । असिचत - असिक्त । लिप उपदेहे (१०) उपदेहो वृद्धिः । लिम्पति, लिम्पते । लेप्ता । आलिपत्, अलिपत-अलिप्त ॥ **इति उभयपदिनः** ॥ कृती छेदने (११) उदात्तः, प-भा । कृन्तति, चकर्त । कर्तिता । कर्तिष्यति - कर्त्स्यति । अकर्तीत् । खिद परिघाते (१२) खिन्दति । चिखेद । खेत्ता । पिश अवयवे दीपनायां च (१३) पिंशति । पेशिता । 'त्वष्टा रूपाणि पिंशतु' ओव्रश्चू छेदने (१४) 'ग्रहिज्या' वृश्चति । 'लिट्यभ्यास' स्येति रेफस्य ऋकारः । तस्यात्वे वस्य पुनरुत्वं न; अत्वस्य स्थानिवत्त्वेन 'न सम्प्रसारणे...' इति निषेधात् । वव्रश्च । वव्रश्चिथ-वव्रष्ठ । व्रश्चिता - व्रष्टा । व्रश्चिष्यति-व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्रक्षीत् । व्यच व्याजीकरणे (१५) विचति । विव्याच, विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत् - अव्यचीत् । 'व्यचेः कुटादित्वमनसि' इति तु नेह प्रव-

र्तते; 'अनसी'ति पर्युदासेन कृन्मात्रविषयत्वात् । उछि उञ्छे (१६) उञ्छः कणश आदानं; 'कणिशाद्यार्जनं शिल' मिति यादवः । ऋच्छ-गतीन्द्रियप्रलयमूर्तिभावेषु (१७) ऋच्छति । 'ऋच्छत्यॄता' मिति गुणः । [1]द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ, आनर्च्छतुः । ऋच्छिता । उज्झ उत्सर्गे (१८) । उज्झति । लुभ विमोहने (१९) । विमोहनमाकुलीकरणम् । लुभति ॥ **तीष सह लुभ रुष रिषः ७-२-४८** इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । लोभिता-लोब्धा । लोभिष्यति । तृप तृम्फ तृप्तौ (२०-२१) तृपति । ततर्प । तर्पिता । लुङि सिच् । अतर्पीत् । सिज्विकल्पस्तु न; तस्य अङपवादत्वेन तृप्यतेरेव ग्रहणात् । शस्य ङित्वान्नलोपे—***शे तृम्फादीनां नुम्वाच्यः** [वा २५४२] आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । तृम्फति । ततृम्फ । तृफ्यात् । मृड पृड सुखने (२२-२३) मृडति, पृडति । शुन गतौ (२४) शुनति । इषु इच्छायाम् । (२५) इच्छति । एषिता-एष्टा । एषिष्यति । इष्यात् । ऐषीत् । कुट कौटिल्ये (२६) 'गाङ् कुटा' दीति ङित्वम्, चुकुटिथ । चुकोट-चुकुट । कुटिता । पुट संश्लेषणे (२७) पुटति । पुटिता, स्फुट विकसने (२८) स्फुटति । स्फुटिता । स्फुरस्फुल सञ्चलने (२९-३०) स्फुरति, स्फुलति ॥ **स्फुरति स्फुलत्योर्निर्निविभ्यः ८-३-७६** षत्वं वा, निष्फुलति, निस्फुरति, णू स्तवने, (३१) । परिणूतगुणोदयः' नुवति । नुनाव,

1 'झरो झरि सवर्णे' इति चलोपस्यासिद्धत्वादिति भावः ॥

नुविता । टुमस्जो शुद्धौ (३२) । अनुदात्तः शजौ, मज्जति । ममज्ज । 'मस्जि नशो...'रिति नुम् ॥ **मस्जेरन्त्यात्पूर्वो नुम् वाच्यः [वा ३२१]** संयोगादिलोपः । ममज्क्थ-ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीन्, अमाङ्क्ताम्, अमाङ्क्षुः । रुजो भङ्गे (३३) रुजति । रोक्ता । रोक्ष्यति । अरौक्षीन्, आरौक्तां, भुजो कौटिल्ये (३४) रुजिवत् । विशप्रवेशने (३५) विशति । मृश आमर्शने (३६) आमर्शनं स्पर्शः । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' अम्राक्षीत् - अमार्क्षीत् - अमृक्षन् । षद्लृ विशरण-गत्यवसादनेषु (३७) सीदतीत्यादि । तेन सीदती सीदन्तीति सिद्धं । शद्लृ शातने (३८) ॥ **शदेश्शितः १-३-६०** शिद्भा-विनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदन् । अशत्स्यत् ॥ कॄ विक्षेपे (३९) ॥ **ऋत इद्धातोः ७ १-१००** किरति । चकार, चकरतुः, चकरुः । करिता - करीता । कीर्यात् । अकारीन् ॥ **किरतौ लवने ६-१-१४०** उपात्किरतेस्सुट् छेदने । उपस्किरति ॥ * **अ[1]ङभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम् [वा ३६९८-९** उपास्किरत्, उपचस्कार ॥ **हिंसायां प्रतेश्च ६-१-१४१** उपात्प्रतेश्च किरतेस्सुट् हिंसायाम् । उपस्किरति, प्रतिस्किरति । गॄ निगरणे (४०) ॥ **अचि विभाषा ८-२-२१** गिरते रेफस्य लोऽजादौ प्रत्यये । गिलति-गिरति । जगाल - जगार । जगलिथ - जगरिथ । गलिता -

---

1 'किरतौ लवने' इति विहित स्सुट् अडभ्यासव्यवधानेऽपि भवतीत्यर्थः ॥

गलीता । गरिता - गरीता । प्रच्छ ज्ञीप्सायाम् (४१) 'ग्रहि' ज्येति सम्प्रसारणम् । पृच्छति । पप्रच्छ, पप्रच्छतुः । पप्रच्छिथ-पप्रष्ठ, प्रष्टा । प्रक्ष्यति, अप्राक्षीत् । मृङ् प्राणत्यागे (४२) अनुदात्तः, आ-भा ॥ **म्रियतेर्लुङ्लिङोश्च १-३-६१** लुङ्लिङोश्शितश्च प्रकृतिभूतान्मृङस्तङ् स्यात् नान्यत्र । रिङ्, इयङ् । म्रियते । ममार । ममर्थ । मम्रिव । मर्ता । मरिष्यति । मृषीष्ट । अमृत ॥ पृङ् व्यायामे (४३) प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे, व्यापप्राते । व्यापरिष्यते । व्यापृत, व्यापृषाताम् । जुषी प्रीतिसेवनयोः । (४४) उदात्तः । जुषते जुजुषे । ओविजी भयचलनयोः (४५) प्रायेणोत्पूर्वः । उद्विजते ॥ **विज इट् १-२-२** विजेः पर इडादि प्रत्ययो ङिद्वत् । उद्विजिता ॥

॥ इति तुदादिप्रकरणम् ॥

## ॥ अथ रुधादिप्रकरणम् ॥

रुधिर् आवरणे (१) अनुदात्ताः, स्वरितेतः उ-भा ॥ **रुधादिभ्यः श्नम् ३-७-७८** शपोऽपवादः, रुणद्धि । श्नसोरल्लोपः, अनुस्वारपरसवर्णौ । [1]रुन्धः, रुन्धन्ति । रुणत्सि, रुन्धः । रुणध्मि, रुन्ध्वः, रुन्ध्मः । रुन्धे, रुन्धाते, रुन्धते । रुन्त्से, रुन्धाथे, रुन्ध्वे । रुन्धे, रुन्ध्वहे, रुन्ध्महे । रुरोध, रुरुधे । रोद्धा । रोत्स्यति, रोत्स्यते । रुणद्धु-रुन्धात्-रुन्धाम्, रुन्धन्तु । रुन्धि । रुणधानि, रुणधाव, रुणधाम । रुन्धाम्, रुन्धाताम, रुन्धताम् । रुन्त्स्व । रुणधै, रुणधावहै, रुणधामहै । अरुणत् - अरुणद्, अरुन्धाम्, अरुन्धन् । अरुणत् (द्) अरुणः । अरुन्ध, अरुन्धाताम्, अरुन्धत । रुन्ध्यात्, रुन्धीत । रुध्यात्, रुत्सीष्ट । अरुधत् - अरौत्सीत् - अरुद्ध । अरोत्स्यत्, अरोत्स्यत । भिदिर् विदारणे (२) छिदिर् द्वैधीकरणे (३) युजिर् योगे (४) रिचिर् विरेचने (५) रिणक्ति, रिङ्क्ते । रिरेच । रेक्ता । रेक्ष्यति । अरिणक् । अरिचत् - अरैक्षीत् - अरिक्त । विचिर् पृथग्भावे (६) विनक्ति, विङ्क्ते । क्षुदिर् सम्पेषणे (७) क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत् - अक्षौत्सीत् - अक्षुत्त । उच्छृदिर् दीप्तिदेवनयोः (८) उदात्तः, छृणत्ति, छृन्ते । चच्छर्द । 'सेऽसि'चीति वेट्, चच्छृत्से चच्छृदिषे । छर्दिता । छर्दिष्यति । छर्त्स्यति । अच्छृदत् - अच्छर्दीत्, अच्छर्दिष्ट । उतृदिर् हिंसानादरयोः (९) उदा-

---

1 णत्वस्यासिद्धत्वादनुस्वारे परसवर्णे च जाते तस्यासिद्धत्वात् न णत्वम् ॥

त्तः, प-भा तृणत्ति, तृन्ते । कृतीच्छेदने, वेष्टने च (१०) कृणत्ति तृह हिसि हिंसायाम् ॥ (११-१२) तृणह इम् ३-३-९२ तृहः श्नमि कृते इम् हलादौ पिति । तृणेढि, तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । श्नान्नलोपः ६-४-२३ श्नमः परस्य नस्य लोपस्स्यात् । हिनस्ति । जिहिंस । हिंसिता ॥ तिप्यनस्तेः ६-२-७३ पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । 'स सजुषो' रित्यस्यापवादः । अहिनत् - अहिनद्, अहिंस्ताम्, अहिंसन् ॥ सिपि धातोरुर्वा ८-२-७४ पदान्तस्य धातोस्सस्य पक्षे 'झलाञ्जशोन्त' इति जश्त्वम्- अहिनः - अहिनत् - अहिनद्, अहिंस्ताम्, अहिंसन् । उन्दी क्लेदने (१३) उनत्ति, उन्तः, उन्दन्ति । उन्दाञ्चकार । औनत्, औन्ताम्, औन्दन् । औनः-औनत्, औनदम् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु (१४) अनक्ति, अङ्क्तः, अञ्जन्ति । आनञ्ज । आनञ्जिथ - अनङ्क्थ । अञ्जिता-अङ्क्ता । अङ्ग्धि, अनजानि । आनक् ॥ अञ्जेस्सिचि ७-२-७१ अञ्जेस्सिचो नित्यमिट् । आञ्जीत् । तञ्चू संकोचने (१५) तनक्ति । तङ्क्ता - तञ्चिता । ओविजी भयचलनयोः (१६) विनक्ति, विङ्क्तः । 'विज इट्' इति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । शिष्लृविशेषणे (१७) अनुदात्तः, प-भा । शिनष्टि, शिष्टः, शिंषन्ति । शिनक्षि । शिशेष, शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः डढडलोपानुस्वारपरसवर्णाः, शिण्ढि । शिनषाणि । अशिनट् । शिंष्यात्, शिष्यात् । अशिषत् । एवं पिष्लृ सञ्चूर्णने (१८) भञ्जो आमर्दने (१९) 'श्नान्न लोपः' । भनक्ति ।

बभञ्जिथ - बभङ्क्थ । भङ्क्ता । भङ्ग्धि, अभाङ्क्षीत् । भुज पालनाभ्यवहारयोः (२०) भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । अभौक्षीत् ॥ **भुजोऽनवने १-३-६६** तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम् । महीं भुनक्ति । ञिइन्धी दीप्तौ (२१) । उदात्तः, आ-भा । इन्धे, इन्धाते, इन्धते । इन्त्से, इन्ध्वे । इन्धाञ्चक्रे । इन्धिता, इन्धाताम् । इनधै । ऐन्ध, ऐन्धाताम् । ऐन्धाः । विद विचारणे (२२) अनुदात्तः, आ-भा, विन्ते । वेत्ता ॥

॥ इति रुधादिप्रकरणम् ॥

## ॥ अथ तनादिप्रकरणम् ॥

तनु विस्तारे (१) उदात्ताः । स्वरितेतः ॥ **तनादिकृञ्भ्य उः ३-१-७९** शपोऽपवादः ॥ तनोति ॥ तन्वः-तनुवः । तनुते ॥ तनुवहे-तन्वहे, तनुमहे-तन्महे ॥ ततान, तेनतुः । तेने । तनितासि तनितासे, तनिष्यति । तनिष्यते ॥ तनोतु । तनु । तनवानि ॥ तनुतां । अतनोत् । तनुयात् । तन्वीत । तन्यात्, तनिषीष्ट ॥ अतनीत्-अतानीत् । (अतनिष्ट-अतानिष्ट) ॥ **तनादिभ्यस्तथासोः २-४-७९** तनादेस्सिचो वा लुक् तथासोः । अनुनासिकलोपः ॥ अतत-अतनिष्ट । अतथाः-अतनिष्ठाः । अतनिष्यत्, अतनिष्यत ॥ षणु दाने (२) सनोति, सनुते ॥ **ये विभाषा ६-४-४३** जनसनखनामात्वं वा यादौ क्ङिति ॥ सायात् । सन्यात् ॥ **जन सन खनां सञ्झलोः ६-४-४२** एषामाकारस्सनि झलादौ क्ङिति ॥ असात-असनिष्ट । असाथाः-असनिष्ठाः ॥ क्षणु हिंसायाम् (३) क्षणोति-क्षणुते । 'ह्म्यं' तेति न वृद्धिः । अक्षणीत् । अक्षत - अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः ॥ क्षिणु च (४) मतभेदेन उप्रत्यये लघूपधस्य गुणो वा ॥ क्षिणोति-क्षेणोति । क्षेणिता । अक्षेणीत् । अक्षित-अक्षेणिष्ट ॥ तृणु अदने (५) तृणोति-तर्णोति । तृणुते-तर्णुते ॥ डुकृञ् करणे (६) अनुदात्तः । उ-भा । करोति । 'अत उत्सार्वधातुके ॥' कुरुतः ॥ **न भकुर्छुराम् ८-२-७९** भस्य कुर्छुरोरुपधाया न दीर्घः । कुर्वन्ति ॥ **नित्यं करोतेः ६-४-१०८**

करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः ॥ कुर्वः, कुर्मः ॥ कुरुते, कुर्वहे, कुर्महे । चकार-चक्रे । कर्ता । करिष्यति - करिष्यते । करोतु, कुरुताम् । अकरोत् । अकुरुत ॥ **ये च ६-४-१०९** कृञ उलोपो यादौ प्रत्यये । कुर्यात्, कुर्वीत, क्रियात्-कृषीष्ट । अकार्षीत् । अकृत । अकरिष्यत्, अकरिष्यत ॥ **सम्परिभ्यां करोतौ भूषणे ६-१-१३७ समवाये च ६-१-१३८** सुट् । समवायस्सङ्घः । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । सम्पूर्वस्य क्वचिदभूषणेऽपि सुट्; 'संस्कृतं भक्षा' इति ज्ञापकात् ॥ **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६-१-१३९** कृञस्सुट् । चात् प्रागुक्तयोरर्थयोः ॥ प्रतियत्नो गुणाधानम्; विकृतमेव वैकृतं विकारः; वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम्; उपस्कृता कन्या । उपस्कृता ब्राह्मणाः । एधोदकस्योपस्कुरुते । उपस्कृतं भुङ्क्ते, उपस्कृतं ब्रूते । वनु याचने (७) आ-भा । वनुते । ववने । चान्द्रमते वनोतीत्यपि । मनु अवबोधने (८) मनुते । मेने । मनिता । मनिष्यते । मनुताम् । अमनुत । मन्वीत । मनिषीष्ट । अमत - अमनिष्ट । अमनिष्यत ॥

॥ इति तनादिप्रकरणम् ॥

## ॥ अथ क्र्यादिप्रकरणम् ॥

डुक्रीञ् द्रव्यविनिमये (१) अनुदात्तः। उ-भा ॥ **क्र्यादिभ्यः श्ना ३-१-८१** शपोऽपवादः ॥ क्रीणाति । 'ई हल्यघोः'। क्रीणीतः । 'झोऽन्तः' 'श्नाभ्यस्तयोरातः' क्रीणन्ति । क्रीणासि, क्रीणीथः, क्रीणीथ । क्रीणामि, क्रीणीवः, क्रीणीमः । क्रीणीते, क्रीणाते, क्रीणते । क्रीणीषे, क्रीणाथे, क्रीणीध्वे । क्रीणे, क्रीणीवहे, क्रीणीमहे । चिक्राय, चिक्रियतुः, चिक्रियुः । चिक्रेथ-चिक्रयिथ, चिक्रयिव । चिक्रिये-चिक्रियिषे । क्रेता । क्रेष्यति-क्रेष्यते । क्रीणातु-क्रीणीतात् । क्रीणीताम् । अक्रीणात्, अक्रीणीत । क्रीणीयात्, क्रीणीत । क्रीयात्, क्रेषीष्ट । अक्रैषीत्, अक्रेष्ट । अक्रेष्यत्, अक्रेष्यत ॥ प्रीञ् तर्पणे कान्तौ च (२) प्रीणाति, प्रीणीते । श्रीञ् पाके (३) श्रीणाति, श्रीणीते ॥ मीञ् हिंसायाम् (४) **हिनुमीना ८-४-१५** उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य [1]णस्स्यात् । प्रमीणाति, प्रमीणीते । मीनाति···इत्यात्वं । ममौ, मिम्यतुः । ममिथ-ममाथ । मम्ये । माता । मास्यति । मीयात्-मासीष्ट । अमासीत्-अमाष्टाम् । अमास्त ॥ षिञ् बन्धने (५) सिनाति, सिनीते । सिषाय, सिष्ये । सेता । स्कुञ् आप्रवणे (६) **स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ३-१-८२** चात् श्ना । स्कुनोति-स्कुनुते । स्कुनाति, स्कुनीते । चुस्काव, चुस्कुवे । स्कोता । अस्कौषीत् ।

---

1 'एकाजुत्तरपदे णः' इति सूत्राण्ण इत्यनुवर्तते ॥

अस्कोष्ट । स्तम्भ्वादयश्चत्वारः सौत्राः सर्वे रोधनार्थाः परस्मैपदिनः ॥ [1]हलश्श्नश्शानज्झौ ३-१-८३ स्तभान । स्तभ्नुहि ॥ जॄस्तम्भुम्रुचुम्लुचु ग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३-१-५८ च्लेरङ् वा ॥ स्तम्भेः ८-३-६७ स्तम्भेस्सौत्रस्य सस्य षस्स्यात् । व्यष्टभत् । अस्तम्भीत् । युञ् बन्धने (७) युनाति, युनीते । योता ॥ क्नूञ् शब्दे (८) क्नूनाति, क्नूनीते । क्नविता ॥ दॄञ् हिंसायां (९) (दृणाति, दृणीते ।) द्रूञ् हिंसायाम् (१०) द्रूणाति, द्रूणीते, पूञ् पवने, (११)प्वादीनां ह्रस्वः ७-३-८० पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्ली नां चतुर्विंशतेश्शिति ह्रस्वः । पुनाति, पुनीते । पविता॥ लूञ् छेदने (१२) लुनाति, लुनीते । स्तॄञ् आच्छादने (१३) स्तृणाति शर्पूर्वाः खयः, तस्तार, तस्तरतुः । तस्तरे । स्तरिता-स्तरीता । स्तृणीयात्, स्तृणीत । स्तीर्यात् ॥ लिङ्सिचोरात्मनेपदेषु ७-२-४२ वृङ् वृञ्भ्यामॄदन्ताच्च परयो लिङ्सिचोरिड्वा स्यात्तङि ॥ न लिङि ७-२-३९ वॄत इटो लिङि न दीर्घः । स्तरिषीष्ट । 'उश्चे'ति कित्त्वम् । स्तीर्षीष्ट...'सिचि च परस्मैपदेषु ।' अस्तारीत्, अस्तारिष्टां, अस्तारिषुः । अस्तरिष्ट-अस्तरिष्ट-अस्तीर्ष्ट । कॄञ् हिंसायाम् (१४) कृणाति, कृणीते । चकार, चकरे ॥ वॄञ् वरणे (१५) वृणाति, वृणीते । ववार, ववरे । वरिता-वरीता । 'उदोष्ठ्ये' त्युत्वम् । वूर्यात् । वरिषीष्ट-वूर्षीष्ट । अवारीत्, अवारिष्टाम् । अवरिष्ट-अवरीष्ट - अवूर्ष्ट । धूञ् कम्पने

---

1 हलः परस्य श्नः शानजादेशः स्यात् हौ परे इत्यर्थः ॥

(१६) धुनाति, धुनीते । दुधविथ-दुधोथ । धोता-धविता । अधावीत्, अधविष्ट-अधोष्ट । ग्रह उपादाने (१७) उदात्तः । स्वरितेत् । गृह्णाति, गृह्णीते । जग्राह, जगृहे ॥ **ग्रहोऽलिटि दीर्घः ३-२-३७** एकाचो ग्रहेर्विहितस्येटो दीर्घः । न तु लिटि । जग्रहिथ । जगृहिषे । ग्रहिता । गृह्णातु ॥ **हलश्श्नश्शानज्झौ ३-१-८३** हलः परस्य श्नः शानजादेशो हौ । गृहाण । गृह्णीयात् । गृह्णीत । गृह्यात् । ग्रहिषीष्ट । 'ह्म्यं' तेति न वृद्धिः । अग्रहीत्, अग्रहीष्टाम् । अग्रहीष्ट, अग्रहीषाताम् । अग्रहीषत । कुष निष्कर्षे । (१८) कुष्णाति । कोषिता ॥ **निरः कुषः ७-२-४६** अस्माद्वलादेरार्धधातुकस्येड्वा । निष्कोषिता - निष्कोष्टा । निरकोषीत्-निरकुक्षत् । अश भोजने (१९) अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान । मुष स्तेये (२०) मोषिता । मुषाण । ज्ञा अवबोधने (२१) जानाति । जज्ञौ । वृङ् सम्भक्तौ (२२) आ-भा । वृणीते । ववृषे । ववृढ्वे । वरिता-वरीता । अवरिष्ट-अवरीष्ट-अवृत ॥

॥ इति क्र्यादिप्रकरणम् ॥

## ॥ अथ चुरादिप्रकरणम् ॥

---

चुरस्तेये (१) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३-१-२५** स्वार्थे। 'पुग' न्तेति गुणः। 'सनाद्यन्ता' इति धातुत्वम्। तिप् शबादि। गुणायादेशौ। चोरयति ॥ **णिचश्च १-३-७४** णिजन्तादात्मनेपदं कर्तृगामिनि क्रियाफले। चोरयते। चोरयांचक्रे, चोरयामास। चोरयिता। चोरयेत्। चोर्यात्। चोरयिषीष्ट। 'णिश्री' ति चङ्, 'णौच ङी' ति ह्रस्वः, 'च ङी' ति द्वित्वम्, हलादिश्शेषः, 'दीर्घो लघो' रित्यभ्यासस्य दीर्घः। अचूचुरत्, अचूचुरत। कथ वाक्यप्रबन्धे (२) [1]अल्लोपः ॥ **अचः परस्मिन् पूर्वविधौ १-१-५७** परनिमित्तोऽजादेशः स्थानिवत् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये। इति स्थानिवत्त्वान्नोपधावृद्धिः। कथयति। अग्लोपित्वाद्दीर्घसन्वद्भावौ न, अचकथत्। गणसङ्ख्याने (३) गणयति ॥ **ई च गणः ७-४-९७** गणयतेरभ्यासस्य ईत् स्याच्चा दङ् परे णौ। अजीगणत्, अजगणत् ॥

॥ इति चुरादिप्रकरणम् ॥

---

1 'अतो लोपः' इत्यनेन अन्त्याकारस्य लोपः।

## ॥ अथ ण्यन्तप्रक्रिया ॥

स्वतन्त्रः कर्ता १-४-५४ क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ तत्प्रयोजको हेतुश्च १-४-५५ कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च ॥ हेतुमति च ३-१-२६ प्रयोजकव्यापारे प्रेषणादौ च वाच्ये धातोर्णिच् । भवन्तं प्रेरयति भावयति । क्रियाफले कर्तृगे भावयत इत्यपि ॥ ओः पुयण् ज्यपरे ७-४-८० सनि परे यदङ्गं तदवयवाभ्यासोत [1]इत्स्यात् पवर्गयण् जकारेऽवर्णपरेषु परतः अबीभवत् । ष्ठा गतिनिवृत्तौ ॥ [2]अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ७-३-३६ स्थापयति ॥ तिष्ठतेरित् ७-४-५ उपधाया इच्चङ्परे णौ । अतिष्ठिपत्, घ्रापयति ॥ जिघ्रतेर्वा ७-४-६ अजिघ्रिपत्—अजिघ्रपत् । पालयति । *पातेर्णौ लुग्वक्तव्यः [वा ४५२०] वो विधूनने जुक् ७-३-३८ जुक् णौ कम्पने । वाजयति । कम्पने किम्? वापयति केशान् ॥ रुहः पोऽन्यतरस्याम् ७-३-४३ णौ रोपयति—रोहयति ॥ क्रीङ्जीनां णौ ६-१-४८ णावेच आत्वम् क्रापयति, अध्यापयति, जापयति ॥ णौ च संश्चङोः २-४-५१ सन्परे चङ्परे च णौ इङो गाङ् । अध्यजीगपत् । अध्यापिपत् । ऊदुपधाया गोहः ६-४-८९ गोहयति ॥ दोषो णौ ६-४-९० दूषयति ॥ वा चित्त[3]विरागे ६-४-९१ चित्तं दूषयति दोषयति वा

1 'भृञामितः' इत्यस्मात् इत् इत्यनुवर्तते ॥ 2 अर्त्यादीनां पुगागमः स्यात् णौ परे ॥ 3 विरागोनाम अप्रीतता ॥

कामः । घट चेष्टायाम् । घटादयो मितः ज्ञपमिच्च ॥ **मितां ह्रस्वः १-४-९२** घटादीनां ज्ञपादीनां च ह्रस्वः । घटयति । ज्ञप ज्ञाने ज्ञापने च । ज्ञपयति । अजिज्ञपत् ॥ **णौ गमिरबोधने २-४-४६** इणः । गमयति । बोधने—प्रत्याययति । इण्वदिकः अधिगमयति । 'हनस्तः' 'हो हन्तेः' । घातयति । निवृत्तप्रेरणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः । तेन 'प्रार्थयन्ति शयनोत्थितं प्रिया' इत्यादि सिद्धम् । एवमन्यत्रापि बोध्यम् ॥

॥ इति ण्यन्तप्रक्रिया ॥

## ॥ अथ सन्नन्तप्रक्रिया ॥

**धातोः कर्मणस्समानकर्तृकादिच्छायां वा ३-१-७** इषिकर्मणः इषिणैककर्तृकात् धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । पठ व्यक्तायां वाचि ॥ **सन्यङोः ६-१-९** सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । 'सन्यतः' पठितुमिच्छति । पिपठिषति । कर्मणः किम्? गमने नेच्छति, समानकर्तृकात्किम्? शिष्याः पठन्त्वितीच्छति गुरुः । वाग्रहणाद्वाक्यमपि । 'लुङ्सनोर्घस्लृ' 'एका च' इति नेट् ॥ **सः स्यार्धधातुके ७-४-४९** सस्य [1]तस्स्यात्सादावार्धधातुके । अत्तुमिच्छति जिघत्सति । 'एका च' इति नेट् ॥ **अज्झनगमां सनि ६-४-१६** अजन्तानां हन्तेरजादेशगमेश्च [2]दीर्घो झलादौ सनि ॥ **इको झल् १-२-९** इगन्ताज्झलादिस्सन् कित् । ऋत इद्धातोः । कर्तुमिच्छति चिकीर्षति । सन्लिटोर्जेः । जिगीषति, जिघांसति ॥ **सनि ग्रहगुहोश्च ७-२-१२** ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात् । जिघृक्षति, जुघुक्षति । बुभूषति ॥

॥ इति सन्नन्तप्रक्रिया ॥

---

1 'अच उपसर्गात्तः' इत्यतः त इत्यस्यानुवृत्तिः ॥ 2 'ढ्रलोपे' इत्यतः दीर्घ इत्यनुवर्तते ॥

## ॥ अथ यङन्तप्रक्रिया ॥

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३-१-२२** पौनः-पुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् ॥ **गुणो यङ्लुकोः ७-४-८२** अभ्यासस्य गुणो यङि यङ्लुकि च । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति । बोभूयते । बोभूयाञ्चक्रे । अबोभूयिष्ट ॥ **नित्यं कौटिल्ये गतौ ३-१-२३** गत्यर्थात् कौटिल्य एव यङ् न तु क्रियासमभिहारे ॥ **दीर्घोऽकितः ७-४-८३** अकितोऽभ्यासस्य दीर्घो यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते ॥ **यस्य हलः ६-४-४९** यस्येति सङ्घातग्रहणम् । हलः परस्य यशब्दस्य लोप आर्धधातुके 'आदेः परस्य,' 'अतो लोपः' वाव्रजाञ्चक्रे । वाव्रजिता ॥ **रीगृदुपधस्य च ७-४-९०** ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः । वरीवृत्यते । वरीवृताञ्चक्रे । वरीवृतिता ॥ **क्षुभ्नादिषु च ८-४-३९** णत्वं न । नरीनृत्यते । जरीगृह्यते ॥

॥ इति यङन्तप्रक्रिया ॥

## ॥ अथ यङ्लुगन्तप्रक्रिया ॥

यङोऽचि च २-४-७४ यङोऽचि प्रत्यये लुक् स्यात् । चकारात् तं विनाऽपि क्वचित् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वा ल्लडादयः । एभ्यः 'शेषात्कर्तरी'ति परस्मैपदमेव । 'चर्करीतं चे'त्यदादौ पाठाच्छपो लुक् ॥ यङो वा ७-३-९४ यङ्लुगन्तात्प रस्य हलादेः पितस्सार्वधातुकस्येड्वा स्यात् 'भूसुवो' रिति निषेधो यङ्लुकि भाषायां न; बोभूतु तेतिक्ते इति छन्दसि निपातनात् । बोभवीति–बोभोति, बोभूतः, 'अदभ्यस्तात्' बोभुवति । बोभवाञ्चकार–बोभवामास । बोभविता । बोभविष्यति । बोभवीतु–बोभोतु–बोभूतात् । बोभूताम्, बोभुवन्तु । बोभूहि । बोभवानि । अबोभवीत्–अबोभोत्, अबोभूताम्, अबोभवुः । बोभूयात् बोभूयाताम्, बोभूयुः । बोभूयात्, बोभूयास्ताम्, बोभूयासुः । 'गाति' स्थेति सिचो लुक्, यङो' वेतीट्, पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्, अबोभूवीत्–आबोभोत्, अबोभूतां, अबोभूवुः । अबोभविष्यत् ॥

॥ इति यङ्लुगन्तप्रक्रिया ॥

## ॥ अथ नामधातुप्रकरणम् ॥

सुप आत्मनः क्यच् ३-१-८ इषिकर्मण एषितुस्सम्बन्धिनस्सुब-न्तादिच्छायामर्थे क्यज्वा ॥ **सुपो धातुप्रातिपदिकयोः २-४-७१** एतयोरवयवस्य सुपो लुक् ॥ **क्यचि च ७-४-३३** अवर्णस्य ईः । आत्मनः पुत्रमिच्छति पुत्रीयति ॥ **नः क्ये १-४-१५** क्यचि क्यङि च नान्तमेव पदं नान्यत् । न लोपः । राजीयति । नान्त-मेवेति किम् ? 'हलि च ।' गीर्यति, पूर्यति । धातोरित्येव । नेह - दिवमिच्छति दिव्यति ॥ **क्यस्य विभाषा ६-४-५०** हलः परयोः क्यच्क्यङोर्लोपो वाऽर्धधातुके । 'आदेः परस्य' 'अतो लोपः' तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता - समिध्यिता । **काम्यच्च ३-१-९** उक्तविषये काम्यच् । पुत्रमात्मन इच्छति पुत्रकाम्यति - पुत्रकाम्यिता ॥ **उपमानादाचारे ३-१-१०** उपमानात्कर्मणस्सुबन्ता-दाचारेऽर्थे क्यच् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ **सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः [वा]** अतोगुणे कृष्ण इवाचरति कृष्णति । स्व इवाचरति स्वति । सस्वौ ॥ **अनुनासि-कस्य क्विझलोः क्ङिति ६-४-१५** अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति । राजेव राजानति । पन्था इव पथीनति ॥ **कष्टाय क्रमणे ३-१-१४** चतु-र्थ्यन्तात्कष्टशब्दात् उत्साहे क्यङ् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥ **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे**

३-१-१७ एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् । शब्दं करोति। शब्दयते । 'तत्करोति तदाचष्ट' इति णिच् ।। **प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च [गण]** प्रातिपदिकाद्धात्वर्थे णिच् स्यात् । इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । इत्यग्लोपः । घटं करोत्याचष्टे वा घटयति ॥

॥ इति नामधातुप्रकरणम् ॥

## ॥ अथ कण्ड्वादिप्रकरणम् ॥

---

कण्ड्वादिभ्यो यक् ३-१-२७ एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे । कण्डूञ् गात्रविघर्षणे । कण्डूयति, कण्डूयते इत्यादि ॥

॥ इति कण्ड्वादिप्रकरणम् ॥

## ॥ अथ आत्मनेपदप्रक्रिया ॥

---

**कर्तरि कर्मव्यतिहारे १-३-१४** क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः ॥ **न गतिहिंसार्थेभ्यः १-३-१५** व्यतिगच्छन्ति । व्यतिघ्नन्ति ॥ **नेर्विशः १-३-१७** निविशते ॥ **परिव्यवेभ्यः क्रियः १-३-१८** परिक्रीणीते, विक्रीणीते, अवक्रीणीते ॥ **विपराभ्यां जेः १-३-१९** विजयते, पराजयते ॥ **समवप्रविभ्यः स्थः १-३-२२** सन्तिष्ठते । अवतिष्ठते । प्रतिष्ठते, वितिष्ठते ॥ **अपह्नवे ज्ञः १-३-४४** शतमपजानीते । अपलपतीत्यर्थः ॥ **अकर्मकाच्च १-३-४५** सर्पिषो जानीते, सर्पिषा उपायेन प्रवर्तत इत्यर्थः ॥ **समस्तृतीयायुक्तात् १-३-५४** रथेन सञ्चरते ॥ **दाणश्च सा चेच्चतुर्थ्यर्थे १-३-५५** सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे दास्या संयच्छते कामी ॥ **पूर्ववत्सनः १-३-६२** सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । एदिधिषते ॥ **हलन्ताच्च १-२-१०** इक्समीपाद्धलः परो झलादिस्सन् कित् । निविविक्षते ॥ **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः १-३-३२** गन्धनं सूचनम् । उत्कुरुते, सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुत्कुरुते, भर्त्सयतीत्यर्थः । हरिमुपकुरुते, सेवत इत्यर्थः । परदारान् प्रकुरुते, तेषु सहसा प्रवर्तते । एधोदकस्योप-

स्कुरुते, गुणमाधत्ते । कथाः प्रकुरुते । कथयतीत्यर्थः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्ते । एषु किम् ? कटं करोति । भुजोऽनवने । ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ॥

॥ इति आत्मनेपदप्रक्रिया ॥

## ॥ अथ परस्मैपदप्रक्रिया ॥

---

अनुपराभ्यां कृञः १-३-७९ कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ॥ अभिप्रत्यतिभ्यः क्षिपः १-३-८० क्षिप प्रेरणे, स्वरितेत् । अभिक्षिपति ॥ प्राद्वहः १-३-८१ प्रवहति ॥ परेर्मृषः १-३-८२ परिमृषति ॥ व्याङ्परिभ्यो रमः १-३-८३ रमु क्रीडायाम्, विरमति ॥ उपाच्च १-३-८४ यज्ञदत्तमुपरमति, उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥

॥ इति परस्मैपदप्रक्रिया ॥

॥ इति पदव्यवस्था ॥

## ॥ अथ भावकर्मप्रक्रिया ॥

**भावकर्मणोः १-३-१३** लस्यात्मनेपदम् ॥ **सार्वधातुके यक् ३-१-६७** भावकर्मवाचिनि धातोर्यक् सार्वधातुके। भावः क्रिया। सा च भावार्थकलकारेणानूद्यते; युष्मदस्मद्भ्यां सामानाधिकरण्याभावात् प्रथमः पुरुषः। तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि। किन्त्वेकवचनमेवोत्सर्गतः। त्वया मयाऽन्यैश्च भूयते। बभूवे ॥ **स्यसिच् सीयुट् तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६-४-६२** उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात् स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च। चिण्वद्भावपक्षेऽयमिट्। चिण्वद्भावाद्वृद्धिः। भाविता—भविता। भाविष्यते—भविष्यते। भूयताम्। अभूयत। भाविषीष्ट—भविषीष्ट ॥ **चिण् भावकर्मणोः ३-१-६६** च्लेश्चिण् स्याद्भावकर्मवाचिनि ते परे। अभावि। अभाविष्यत—अभविष्यत। अकर्मकोऽप्युपसर्गवशात्सकर्मकः। अनुभूयते अनन्दश्चैत्रेण त्वया मया च। अनुभूयेते। अनुभूयन्ते। त्वमनुभूयसे। अहमनुभूये। अन्वभावि, अन्वभाविषाताम्—अन्वभविषाताम्। णिलोपः। भाव्यते। भावयाञ्चक्रे—भावयाम्बभूवे—भावयामासे—चिण्वदिट्। भाविता। आभीयत्वेनासिद्धत्वाण्णिलोपः, भावयिता। भावयिषीष्ट। अभावि, अभाविषाताम्—अभावयिषाताम्। बुभूष्यते।

बुभूषाञ्चक्रे । बुभूषिता । बुभूषिष्यते—बोभूय्यते—बोभूयिष्यते 'अकृत्सार्वधातुकयोर्दीर्घः' । स्तूयते विष्णुः । स्ताविता—स्तोता स्ताविष्यते—स्तोष्यते । अस्तावि, अस्ताविषाताम्—अस्तोषाताम् ऋगतौ । 'गुणोर्ती' ति गुणः । अर्यते । स्मृ स्मरणे । स्मर्यते सस्मरे । उपदेशग्रहणाच्चिण्वदिट् । अरिता—अर्ता । स्मारिता स्मर्ता । 'अनिदिता' मिति नलोपः । स्रस्यते । इदितस्तु—नन्द्यते सम्प्रसारणम् । इज्यते ॥ **तनोतेर्यकि ६-४-४४** [1]आदन्तादेशो वा तायते—तन्यते ॥ **तपोऽनुतापे च ३-१-६५** तपः च्ले [2]श्चिण् स्यात् कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन, 'घुमास्थे...' तीत्वम् दीयते । धीयते । ददे ॥ **आतो युक् चिण् कृतोः ७-३-३३** आदन्तानां युगागमश्चिणि ञ्णिति कृति च । दायिता—दाता दायिषीष्ट—दासीष्ट । अदायि, अदायिषाताम् । भज्यते ॥ **भञ्जेश्च चिणि ६-४-३३** [3]नलोपो वा । अभाजि—अभञ्जि । लभ्यते **विभाषा चिण्णमुलोः ७-१-६९** लभे[4]र्नुम् । अलम्भि—अलाभि ॥

॥ इति भावकर्मप्रक्रिया ॥

---

1 'विड्वनोः...' इत्यतः आदित्यनुवर्तते ॥ 2 'चिण्तेपदः' नरुधः आभ्य चिण् नेति चानुवर्तते ॥ 3 'श्नान्नलोपः' 'जान्तनशांविभाषा' आभ्यां नलोप विभाषा इति चानुवर्तते ॥ 4 'इदितोनुम् धातोः' इत्यतः नुम् इत्यस्यानुवृत्तिः

## ॥ अथ कर्मकर्तृप्रक्रिया ॥

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः ॥ **कर्मवत्कर्मणा तुल्यक्रियः ३-१-८७** कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण् चिण्वदिटस्स्युः । पच्यते फलम् । भिद्यते काष्ठम् । अपाचि, अभेदि । भावे । भिद्यते काष्ठेन ॥

॥ इति कर्मकर्तृप्रक्रिया ॥

## ॥ अथ लकारार्थप्रक्रिया ॥

**अभिज्ञावचने लृट् ३-२-११२** स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट्। [1]लङोऽपवादः। वस निवासे। स्मरसि कृष्ण! गोकुले वत्स्यामः। एवं बुध्यसे। चेतयसे इत्यादिप्रयोगेऽपि। **न यदि ३-२-११३** यद्योगे उक्तन्न। अभिजानासि यद्वने अभुञ्ज्महि॥ **लट् स्मे ३-२-११८** [2]लिटोऽपवादः। यजति स्म युधिष्ठिरः॥ **वर्तमानसामीप्ये वर्तमानवद्वा ३-३-१३१** वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः। कदाऽऽ-गतोऽसि? अयमागच्छामि, अयमागमं वा। कदा गमिष्यसि? एष गच्छामि—गमिष्यामि वा॥ **हेतुहेतुमतोर्लिङ् ३-३-१५६** वा स्यात्। कृष्णं नमेच्चेत् सुखं यायात्। कृष्णं नंस्यति चेत् सुखं यास्यति। भविष्यत्येवेष्यते। नेह। हन्तीति पलायते। विधिनि-मन्त्रणेति लिङ्। विधिः प्रेरणम्। भृत्यादेर्निकृष्टस्य प्रवर्तनम्; यजेत। निमन्त्रणं नियोगकरणम् आवश्यके श्राद्धादौ दौहित्रादेः प्रवर्तनम्; इह भुञ्जीत। आमन्त्रणं कामचारानुज्ञा; इहासीत। अधीष्टः सत्कारपूर्वको व्यापारः, पुत्रमध्यापयेद्भवान्। सम्प्रश्नः सम्प्रधारणम्, किं भो! वेदमधीयीय उत तर्कम्? प्रार्थनं याच्ञा; भो! भोजनं लभेय। एवं लोट्॥

॥ इति लकारार्थप्रक्रिया ॥

॥ तिङन्तप्रक्रिया समाप्ता ॥

---

1 'अनद्यतने लङ्' इत्यस्यापवादः 2 'परोक्षे लिट्' इत्यस्यापवादः॥

## ॥ अथ कृत्यप्रक्रिया ॥

---

**धातोः ३-१-९१** आतृतीयाध्यायान्तं ये प्रत्ययास्ते धातोः परे स्युः। कृदतिङिति कृत्संज्ञा ॥ **वाऽसरूपोऽस्त्रियाम् ३-१-९४** अस्मिन् धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना ॥ **कृत्याः ३-१-९५** ण्वुल् तृचावित्यतः प्राक्कृत्यसंज्ञास्स्युः ॥ **कर्तरि कृत् ३-४-६७** इति प्राप्ते ॥ **तयोरेव कृत्यक्तखलर्थाः ३-४-७०** एते भावकर्मणोरेव स्युः ॥ **तव्यत्तव्यानीयरः ३-१-९६** धातोरेते स्युः, एधितव्यमेधनीयं त्वया। भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वया ॥ ***केलिमर उपसंख्यानम् [वा]** पचेलिमा माषाः, पक्तव्या इत्यर्थः। भिदेलिमास्सरलाः। भेत्तव्याः। कर्मणि प्रत्ययः ॥ **कृत्यल्युटो बहुलम् ३-३-११३**

> क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
> विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

स्नात्यनेनेति स्नानीयं चूर्णम्। दीयतेऽस्मै दानीयो विप्रः ॥ **अचो यत् ३-१-९७** अजन्ताद्धातोर्यत् स्यात्। चेयम् ॥ **ईद्यति ६-४-६५** यति परे आत ईत्स्यात्। देयम्; ग्लेयम्; **पोरदुपधात् ३-१-९८** पवर्गान्ताददुपधाद्यत्। ण्यतोऽपवादः। शप्यम्, लभ्यम् ॥ **एतिस्तुशास्वृदृजुषः क्यप् ३-१-१०९** एभ्यः क्यप् ॥ **ह्रस्वस्य पिति**

**कृति तुक् ६-१-७१** इत्यः, स्तुत्यः । शासु अनुशिष्टौ ॥ **शा इदङ्हलोः ६-४-३४** शासः उपधाया इत्स्यादङि हलादौ क्ङि च । शिष्यः । वृत्यः, आदृत्यः, जुष्यः ॥ **मृजेर्विभाषा ३-१-११** मृजेः क्यब्वा । मृज्यः ॥ **ऋहलोर्ण्यत् ३-१-१२४** ऋवर्णान्ताद्ध लन्ताच्च ण्यत् । कार्यम्, हार्यम्, धार्यम् ॥ **चजोः कु घिण्यतोः ७-३-५२** चजोः कुत्वं स्यात् घिति ण्यति च ॥ **मृजेर्वृद्धिः ७-२-११४** मृजेरिको वृद्धिस्सार्वधातुकार्धधातुकयोः । मार्ग्यः **भोज्यं भक्ष्ये ७-३-६९** भोग्यमन्यत् ॥

॥ इति कृत्यप्रक्रिया ॥

## ॥ अथ कृदन्तप्रकरणम् ॥

**ण्वुल्तृचौ ३-१-१३३** धातोरेतौ स्तः । 'कर्तरि कृ'दिति कर्त्रर्थे ॥ **युवोरनाकौ ७-१-१** यु वु एतयोरनाकौ स्तः । कारकः कर्ता ॥ **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३-१-१३४** नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् । नन्दयतीति नन्दनः, जनार्दनः, लवणः । ग्राही, स्थायी, मन्त्री । पचादिराकृतिगणोऽयम् । **इगुपधज्ञाप्रीकिरः कः ३-१-१३५** एभ्यः कः—बुधः, कृशः, ज्ञः, प्रियः, किरः ॥ **आतश्चोपसर्गे ३-१-१३६** प्रज्ञः, सुग्लः ॥ **गेहे कः ३-१-१४४** गेहे कर्तरि ग्रहेः कस्स्यात् । गृहम् ॥ **कर्मण्यण् ३-२-१** कर्मण्युपपदे धातोरण् । कुम्भं करोतीति कुम्भकारः ॥ **आतोऽनुपसर्गे कः ३-२-३** आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कस्स्यात् । आतो लोपः । अणोऽपवादः । गोदः, धनदः, कम्बलदः । अनुपसर्गे किम्? गोसंदायः ॥ ***मूलविभुजादिभ्यः कः [वा]** मूलानि विभुजतीति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः, कुध्रः ॥ **चरेष्टः ३-२-१६** अधिकरणे उपपदे । कुरुचरः ॥ **भिक्षासेनादायेषु च ३-२-१७** भिक्षाचरः, सेनाचरः, आदायेति ल्यबन्तम् । आदायचरः ॥ **कृञो हेतुताच्छील्यानुलोम्येषु ३-२-२०** एषु द्योत्येषु करोतेष्टः ॥ **अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८-३-४६** अत उत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु । यशस्करी विद्या, श्राद्धकरः,

वचनकरः ॥ **एजेः खश्** ३-२-२८ ण्यन्तादेजेः खश् ॥ **अरुर्द्विषदजन्तस्य मुम्** ६-३-६७ अरुषो द्विषतोऽजन्तस्य च मुमागमः खिदन्ते परे नत्वव्ययस्य । शित्वाच्छबादिः । जनमेजयतीति जनमेजयः ॥ **प्रियवशे वदः खच्** ३-२-३८ प्रियंवदः, वशंवदः ॥ **आत्ममाने खश्च** ३-२-८३ स्वकर्मके मनने वर्तमानान्मन्यतेस्सुपि खश् स्यात् चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितंमन्यः, पण्डितमानी ॥ **अन्येभ्योऽपि दृश्यन्ते** ३-२-७५ मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोस्स्युः ॥ **नेड्वशि कृति** ७-२-८ वशादेः कृत इण् न । शॄ हिंसायाम् । सुशर्मा । प्रातरित्वा ॥ **विड्वनोरनुनासिकस्यात्** ६-४-४१ अनुनासिकस्याऽत्स्यात् । विजायत इति विजावा । ओणॄ अपनयने । अवावा । विच् । रुष् रिष् हिंसायाम् । रोट्, रेट्, सुगण् ॥ **क्विप् च** ३-२-७६ अयमपि दृश्यते । उखास्रत्, पर्णध्वत्, वाहभ्रट् ॥ **सुप्यजातौ णिनिस्ताच्छील्ये** ३-२-७८ अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी ॥ **मनः** ३-२-८२ सुपि मन्यतेर्णिनिस्स्यात् । दर्शनीयमानी ॥ **खित्यनव्ययस्य** ६-३-६६ खिदन्ते परे पूर्वपदस्य ह्रस्वः । कालिम्मन्या ॥ **करणे यजः** ३-२-८५ करणे उपपदे भूतार्थयजेर्णिनिः कर्तरि । सोमेनेष्टवान् सोमयाजी । अग्निष्टोमयाजी ॥ **दृशेः क्वनिप्** ३-२-९४ कर्मणि भूते । पारं दृष्टवान् पारदृश्वा ॥ **राजनि युधि कृञः** ३-२-९५ क्वनिप् । युधिरन्तर्भावितण्यर्थः । राजा योधितवान् राजयुध्वा । राजकृत्वा ॥ **सहे च** ३-२-९६ सह

योधितवान् सहयुध्वा, सहकृत्वा ॥ **सप्तम्यां जनेर्डः ३-२-९७ तत्पुरुषे कृति बहुलम् ६-३-१४** ङेरलुक् । सरसिजम्, सरोजम् ॥ **उपसर्गे च संज्ञायाम् ३-२-९९** 'प्रजास्यात्सन्ततौ जने'॥ **क्तक्तवतू निष्ठा १-१-२६** एतौ निष्ठासंज्ञौ स्तः ॥ **निष्ठा ३-२-१०२** भूतार्थवृत्तेर्धातोर्निष्ठा । तत्र 'तयोरे' वेति भावकर्मणोः क्तः । 'कर्तरिकृ'दिति कर्तरि क्तवतुः । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ॥ **रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८-२-४२** रदाभ्यां परस्य निष्ठातस्य नो निष्ठापेक्षया पूर्वस्य धातोर्दस्य च । शॄ हिंसायाम् । शीर्णः । भिन्नः । छिन्नः ॥ **संयोगादेरातो धातोर्यण्वतः ८-२-४३** निष्ठातस्य नस्स्यात् । द्राणः, ग्लानः ॥ **ल्वादिभ्यः ८-२-४४** एकविंशतेः लूञादिभ्यः प्राग्वत् । लूनः । ज्याधातोः 'ग्रहिज्ये'ति सम्प्रसारणम्—**हलः ६-४-२** अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्तस्य दीर्घः । जीनः ॥ **ओदितश्च ८-२-४५** भुजो, भुग्नः । टुओश्वि, उच्छूनः ॥ **शुषः कः ८-२-५१** निष्ठातस्य । शुष्कः ॥ **पचो वः ८-२-५२** पक्वः । क्षै हर्षक्षये ॥ **क्षायो मः ८-२-५३** क्षामः ॥ **निष्ठायां सेटि ६-४-५२** णेर्लोपः । भावितः । भावितवान् । दृह हिंसायाम् ॥ **दृढः स्थूलबलयोः ७-२-२०** स्थूले बलवति च निपात्यते ॥ **दधातेर्हिः ७-४-४२** तादौ किति । हितम् ॥ **दोदद्घोः ७-४-४६** घुसंज्ञकस्य दा इत्यस्य दथ् तादौ किति । चर्त्वम् । दत्तः ॥ **लिटः कानज्वा ३-२-१०६—क्वसुश्च ३-२-१०७** लिटः कानच्क्वसू वा स्तः ।

'तङानावात्मनेपदम्'। चक्राणः ॥ **म्वोश्च ८-२-६५** मान्तस्य धातोर्नत्वम् म्वोः परतः। जगन्वान् ॥ **लटश्शतृशानचावप्रथमासमानाधिकरणे ३-२-१२४** अप्रथमान्ते न समानाधिकरणे लट एतौ वा स्तः। शबादिः। पचन्तं चैत्रं पश्य ॥ **आने मुक् ७-२-८२** अदन्ताङ्गस्य। पचमानं चैत्रं पश्य। लडित्यनुवर्तमाने पुनर्लड्ग्रहणात् प्रथमासामानाधिकरण्येऽपि क्वचित्। सन् द्विजः ॥ **विदेश्शतुर्वसुः ७-१-३६** वेत्तेः परस्य शतुर्वसुरादेशो वा। विदन्। विद्वान् ॥ **तौ सत् ३-२-१२७** तौ शतृशानचौ सत्संज्ञौ स्तः ॥ **लृटस्सद्वा ३-३-१४** करिष्यन्तं करिष्यमाणं पश्य ॥ **आक्वेस्तच्छील तद्धर्म तत्साधुकारिषु ३-२-१३४** क्विपमभिव्याप्य वक्ष्यमाणास्तच्छीलादिषु कर्तृषु बोध्याः ॥ **तृन् ३-२-१३५** कर्ता कटान् ॥ **जल्पभिक्षकुट्टलुण्टवृङष्पाकन् ३-२-१५५—षः प्रत्ययस्य १-३-६** प्रत्ययस्यादिष्ष इत्संज्ञस्स्यात्। जल्पाकः, वराकः ॥ **सनाशंसभिक्ष उः ३-२-१६८** चिकीर्षुः, आशंसुः, भिक्षुः ॥ **भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ३-२-१७७** विभ्राट्। भाः ॥ **राल्लोपः ६-४-२१** रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति च। धूः, विद्युत्, ऊर्क्, पूः। दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः, जूः। ग्रावस्तुत् ॥ **क्विप् वचिप्रच्छ्यायतस्तु कटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च [वा]** वक्तीति वाक् ॥ **च्छ्वोश्शूडनुनासिके च ६-४-१९** सतुक्कस्य छस्य वस्य च क्रमात् श् ऊठ् एतावादेशौ स्तः। क्वौ अनुनासिकादौ झलादौ क्ङिति च। पृच्छतीति प्राट्। आयतं स्तौति आयतस्तूः। कटं प्रवते

कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः ॥ **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३-२-१८२** दावादेः [1]ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन दात्रम् ॥ **तितुत्रतथसिसुसरकसेषु च ७ २-९** एषां दशानां कृत्प्रत्ययानामिण् न । शस्त्रम्, योत्रम्, योक्त्रम्, स्तोत्रम्, तोत्रम्, सेत्रम्, सेक्त्रम्, मेढ्रम्, पत्रम्, दंष्ट्रा, नध्री ॥ **अर्तिलूधूसूखनसहचर इत्रः ३-२-१८४** अरित्रम्, लवित्रम्, धवित्रम्, सवित्रम्, खनित्रम्, सहित्रम्, चरित्रम् ॥ **पुवस्संज्ञायाम् ३-२-१८५** पवित्रम् ॥

॥ इति कृदन्तप्रकरणम् ॥

1 'धः कर्मणि ष्ट्रन्' इत्यस्मात् ष्ट्रन् इत्यनुवर्तते ॥

## ॥ अथ उणादिप्रकरणम् ॥

कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ करोतीति कारुः । वातीति वायुः । पायुर्गुदं । जायुरौषधं । मायुः पित्तम् । स्वादु साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् ॥ [1]उणादयो बहुलम् ३-३-१ एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ॥

श्लो. संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम् ३-३-१० क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति, कृष्णं दर्शको याति ॥ कालसमयवेलासु तुमुन् ३-३-१६७ कालस्समयो वेला वा भोक्तुम् ॥ भावे ३-३-१८ सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातो[2]र्घञ् । पाकः ॥ अकर्तरि च कारके संज्ञायाम् ३-३-१९ कर्तृभिन्ने कारके घञ् ॥ घञि च भावकरणयोः ६-४-२७ [3]रञ्जेर्नलोपस्स्यात् । रागः । अनयोः किम्? रज्यत्यस्मिन्निति [4]रङ्गः ॥ निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३-३-४१ एषु चिनोतेर्घञ् आदेश्च कः । उपसमाधानं राशीकरणं । निकायः, कायः, गोमयनिकायः ॥ ए रच् ३-३-५६

---

1 अन्येऽप्युणादयो बहवः प्रत्ययास्सन्ति । ग्रन्थविस्तरभियाऽत्र ते नोक्ताः ॥ 2 'पदरुज' इत्यस्मात् 'घञ्' इत्यनुवर्तते ॥ 3 'श्नान्नलोपः' 'रञ्जेश्च' इति चानुवर्तते ॥ 4 नाट्यशाला ॥

इवर्णान्तात् । चयः । जयः ॥ **ॠदोरप् ३-३-५७** ॠवर्णान्तादुवर्णान्ताच्चाप् । करः, गरः, यवः, स्तवः, लवः, पवः ॥ **घञर्थेकविधानम् [वा]** प्रस्थः, विघ्नः ॥ **ड्वितः क्त्रिः ३-३-८८ क्त्रेर्मम् नित्यम् ४-४-२०** क्त्रिप्रत्ययान्तान्मम् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप्, उप्त्रिमम् ॥ **ट्वितोऽथुच् ३-३-८९** टुवेपृ कम्पने । वेपथुः ॥ **यज याच यत विच्छ प्रच्छ रक्षो नङ् ३-३-९०** यज्ञः, याच्ञा, यत्नः, [1]विश्नः, प्रश्नः, रक्ष्णः ॥ **स्वपो नन् ३-३-९१** स्वप्नः ॥ **उपसर्गे घोः किः ३-३-९२** प्रधिः, उपधिः ॥ **स्त्रियां क्तिन् ३-३-९४** स्त्रीलिङ्गे भावे क्तिन् । घञोऽपवादः । कृतिः, स्तुतिः ॥ **ॠल्वादिभ्यः क्तिन् निष्ठावद्वाच्यः [वा]** तेन नत्वम् । कीर्णिः, लूनिः, धूनिः, [2]पूनिः ॥ **सम्पदादिभ्यः क्विप्** सम्पत्, विपत्, आपत्, क्तिन्नपीष्यते । सम्पत्तिः, विपत्तिः, आपत्तिः ॥ [3]**ऊति यूति जूति साति हेति कीर्तयश्च ३-३-९७** एते निपात्यन्ते ॥ **ज्वरत्वर स्रिव्य विमवा मुपधायाश्च ६-४-२०** एषामुपधावकारयो-[4]रूठ् अनुनासिके क्वौ झलादौ क्ङिति च । ऊतिः । क्विप्, जूः, तूः, स्रूः, [5]ऊः, [6]मूः ॥ **इच्छा ३-३-१०१** इषेर्निपातोऽयम् ॥ **अ प्रत्ययात् ३-३-१०२** प्रत्ययान्तेभ्यः स्त्रियामकारः प्रत्ययस्स्यात् । चिकीर्षा, पुत्रकाम्या ॥ **गुरोश्च हलः ३-३-१०३** गुरुमतो हलन्तात् स्त्रियामः प्रत्ययः । ईहा ॥ **ण्यासश्रन्थो युच् ३-३-१०७**

---

1 प्रतापः ॥ 2 विनाश इत्यर्थः ॥ पतिव्रतायां पूतिः ॥ 3 रक्षा ॥ 4 'अनुनासिकस्य क्विझलोः क्ङिति' 'छ्वोश्शूडनुनासिके च' एते सूत्रे अनुवर्तेते ॥ 5 रक्षकः ॥ 6 बन्धकः ॥

अकारस्यापवादः । कारणा, हारणा ॥ **नपुंसके भावे क्तः ३-३-११४** **ल्युट् च ३-३-११५** हसितम्, हसनम् ॥ **पुंसि संज्ञायां घः प्रायेण ३-३-११८** **छादेर्घेऽद्व्युपसर्गस्य ६-४-९६** द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे । दन्तच्छदः, आकुर्वन्त्यस्मिन्नित्याकरः । **अवे तॄस्त्रोर्घञ् ३-३-१२०** अवतारः । अवस्तारो जवनिका । **हलश्च ३-३-१२१** हलन्ताद्घञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः ॥ **ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३-३-१२६** एषु दुःखसुखार्थेषूपपदेषु खल् । 'तयो' रेवेति भावे कर्मणि च । कृच्छ्रे—दुष्करः कटो भवता । अकृच्छ्रे—ईषत्करः, सुकरः । **आतो युच् ३-३-१२८** खलोऽपवादः । ईषत्पानस्सोमो भवता । दुष्पानः, सुपानः ॥ **अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा ३-४-१८** प्रतिषेधार्थयोरलङ्खल्वोरुपपदयोः क्त्वा । 'दो दद्घोः' । अलं दत्त्वा । 'घुमा' स्येतीत्वम्, पीत्वा खलु । अलङ्खल्वोः किं? माकार्षीत् । प्रतिषेधयोः किम्? अलङ्कारः ॥ **समानकर्तृकयोः पूर्वकाले ३-४-२१** समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा । स्नात्वा व्रजति । द्वित्वमतन्त्रम् । भुक्त्वा पीत्वा व्रजति ॥ **न क्त्वा सेट् १-२-१८** सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किं? कृत्वा ॥ **रलो व्युपधाद्धलादेस्संश्च १-२-२६** इवर्णोवर्णोपधाद्धलादेः रलन्तात् परौ क्त्वासनौ सेटौ [1]वा कितौ स्तः । द्युतित्वा, द्योतित्वा, लिखित्वा, लेखित्वा । व्युपधात्किम्? वर्तित्वा । र

1 'असंयोगात्...' 'नोपधात्थ...' आभ्यां कित् वा इति चानुवर्तते ॥

किम्? सेवित्वा, हलादेः किम्? [1]एषित्वा। सेट् किम्? भुक्त्वा॥ **उदितो वा ७-२-५६** उदितः परस्य क्त्वा इड्वा। शमित्वा, शान्त्वा। देवित्वा, द्युत्वा। 'दधातेर्हिः' हित्वा॥ **जहातेश्च क्त्वि ७-४-४३** हित्वा। हाङस्तु—हात्वा॥ **समासेऽनञ्पूर्वे क्त्वो ल्यप् ७-१-३७** अव्ययपूर्वपदेऽनञ् समासे क्त्वो ल्यबादेशः। तुक्। प्रकृत्य। अनञ् किम्? अकृत्वा। अव्ययपूर्वपदे किम्? परमकृत्वा॥ **आभीक्ष्ण्ये णमुल्च ३-४-२२** आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् क्त्वा च॥ **नित्यवीप्सयोः ८-१-४** आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य [2]द्वित्वं स्यात्, आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु कृदन्तेषु च। स्मारं स्मारं नमति शिवम्। स्मृत्वा स्मृत्वा, पायं पायम्, भोजं भोजम् श्रावं श्रावम्॥ **अन्यथैवं कथमित्थंसु सिद्धाप्रयोगश्चेत् ३-४-२७** एषु कृञो णमुल् स्यात् सिद्धोऽप्रयोगोऽस्यैवंभूतश्चेत्कृञ्। व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम्, एवं कारम्, कथं कारम्, इत्थं कारं भुङ्क्ते। सिद्धेति किम्? शिरोऽन्यथा कृत्वा भुङ्क्ते॥

॥ इति उणादिप्रकरणम्॥

---

1 गत्वेत्यर्थः॥ 2 'सर्वस्य द्वे' इत्यतः द्वे इत्यस्यानुवृत्तिः॥

## ॥ अथ विभक्त्यर्थप्रकरणम् ॥

---

[1]प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २-३-४६ नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये [2]परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे—उच्चैः, नीचैः, कृष्णः, श्रीः ज्ञानम् लिङ्गमात्रे—तटः, तटी, तटम् ; परिमाणमात्रे—द्रोणो व्रीहिः, वचनं संख्या—एकः, द्वौ, बहवः ॥ [3]सम्बोधने च २-३-४७ प्रथमा हे राम ॥ **कर्तुरीप्सिततमं कर्म १-४-४९** [4]कर्तुः क्रियया आप्तुमिष्टतमं [5]कारकं [6]कर्मसंज्ञं स्यात् ॥ **कर्मणि द्वितीया २-३-२** अनुक्ते कर्मणि द्वितीया । हरिं भजति । [7]अभिहिते तु कर्मादौ प्रथमा । हरिस्सेव्यते । लक्ष्म्या सेवितः ॥ **अकथितं च १-४-५१** [8]अपा

---

1 यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन उपस्थितिर्भवति स प्रातिपदिकार्थ इत्यर्थः ॥ 2 परिमाणशब्देन च संख्याकालातिरिक्तं परिच्छेदकमात्रं गृह्यते । तेन फलं वृतं इत्यादावपि प्रथमा ॥ 3 सम्बोधनं तु अनभिमुखमभिमुखीकृत्य अज्ञातार्थविषयकज्ञानानुकूलव्यापारानुकूलव्यापारः; सम्बोध्यत्वं तु तद्व्यापारजन्यज्ञानानुकूलव्यापाराश्रयत्वम् ॥ 4 प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयत्वं कर्तृत्वम् ॥ 5 क्रियान्वयित्वं वा क्रियाजनकत्वं वा कारकत्वम् । 6 कर्तृनिष्ठव्यापारजन्यफलसम्बन्धप्रकारकेच्छाविशेष्यत्वेनोद्देश्यत्वं कर्मत्वमिति फलितम् ॥ 7 उक्तार्थानामप्रयोगः इति न्यायेन द्वितीयाया अप्राप्तेरिति भावः ॥ 8 अपादानं सम्प्रदानं अधिकरणं कर्म करणं कर्ता हेतुः इत्येतैर्विशेषै रित्यर्थः ॥

दानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् । [1]दुह् याच् पच् दण्ड् रुधि प्रच्छि चिञ् ब्रूञ् शासु जिमथ् मुषाम् । [2]कर्मयुक्स्यादकथितं तथा स्यान्नीहकृष्वहाम् ॥१॥ [3]गां दोग्धि पयः । बलिं याचते वसुधाम् । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तं । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्ति इत्यादि ॥ **साधकतमं करणम् १-४-४२** क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् । स्वतन्त्र इति कर्तृसंज्ञा ॥ **कर्तृकरणयोस्तृतीया २-३-१८** अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ॥ **प्रकृत्यादिभ्य उपसंख्यानम्** [वा १४६६] प्रकृत्या चारुरित्यादिः ॥ **सहयुक्तेऽप्रधाने २-३-१९** सहार्थेन युक्ते अप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता ॥ एवं साकं सार्धं समं योगेऽपि विनाऽपि तद्योगं तृतीया ; 'वृद्धो यू'नेति निर्देशात् ॥ **हेतौ २-३-२३** हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वं । करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च दण्डेन घटः, पुण्येन दृष्टो हरिः । फलमपीह हेतुः । अध्यय-

---

1 दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां च कर्मणा यद्युज्यते तदेवाकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः ॥ 2 कर्मनिष्ठधात्वर्थस्य निमित्तमित्यर्थः ॥ 3 पयः कर्मकं गोसम्बन्धि दोहनमित्यर्थः ॥

नेन वसति ॥ **कर्मणा यमभिप्रैति स सम्प्रदानम्** १-४-३२ दानस्य कर्मणा यमभिप्रैति सः सम्प्रदानसंज्ञः ॥ **चतुर्थी सम्प्रदाने** २-३-१३ विप्राय गां ददाति ॥ *__तादर्थ्ये चतुर्थी वाच्या__ [वा १४५८] मुक्तये हरिं भजति ॥ *__क्लृपि सम्पद्यमाने च__ [वा १४५९] भक्तिर्ज्ञानाय कल्पते । सम्पद्यते-जायते इत्यादि ॥ *__उत्पातेन ज्ञापिते च__ [वा १४६०] वाताय कपिला विद्युदित्यादि ॥ *__हितयोगे च__ [वा १४६१] ब्राह्मणाय हितम् ॥ **नमस्स्वस्तिस्वाहा स्वधालं वषड्योगाच्च** २-३-१६ एभिर्योगे चतुर्थी । हरये नमः, प्रजाभ्यस्स्वस्ति, अग्नये स्वाहा, पितृभ्यस्स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुस्समर्थः शक्त इत्यादि ॥ **ध्रुवमपायेऽपादानम्** १-४-२४ अपायो विश्लेपस्तस्मिन् साध्ये यद्ध्रुवमवधिभूतं कारकं तदपादानसंज्ञं स्यात् ॥ **अपादाने पञ्चमी** २-३-२८ ग्रामादायाति, धावतोऽश्वात्पतति । इत्यादि ॥ **भीत्रार्थानां भयहेतुः** १-४-२५ भयार्थानां त्राणार्थानां च योगे भयहेतुरपादानं स्यात् । चौराद्बिभेति, चौरात्त्रायते । भयहेतुः किम्? अरण्ये बिभेति त्रायते वा ॥ *__ल्यब्लोपे कर्मण्यधिकरणे च__ [वा १४७४-१४७५] प्रासादात्प्रेक्षते । आसनात्प्रेक्षते, प्रासादमारुह्यासने उपविश्येत्यर्थः ॥ **षष्ठी शेषे** २-३-५० कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिश्शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतं, सर्पिषो जानीते, मातुस्स्मरति, एधोदकस्योपस्कुरुते, भजे शम्भोश्चरणयोः, फलानां तृप्तः ॥ **कर्तृकर्मणोः कृति**

२-३-६५ कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः, जगतः कर्ता कृष्णः ॥ **उभयप्राप्तौ कर्मणि** २-३-६६ उभयोः प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी । आश्चर्यो गवां दोहोऽगोपेन ॥ **आधारोऽधिकरणम्** १-४-४५ कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात् ॥ **सप्तम्यधिकरणे च** २-३-३६ चकाराद्दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति, मोक्षे इच्छाऽस्ति, सर्वस्मिन्नात्माऽस्ति, वनस्य दूरे अन्तिके वा ॥ *निमित्तात्कर्मयोगे [वा १४९०] निमित्तमिह फलं, योगस्संयोगसमवायात्मकः, तेन हेतुतृतीया न ॥

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
वालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

॥ इति विभक्त्यर्थप्रकरणम् ॥

## ॥ अथ केवलसमासप्रकरणम् ॥

समासः पञ्चधा । तत्र समसनं समासः; स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः, प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः, प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः [तत्पुरुषभेदः कर्मधारयः - कर्मधारयभेदो द्विगुः] प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः, प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ॥ **समर्थः पदविधिः २-१-१** पदसम्बन्धी यो विधिस्स समर्थाश्रितो बोध्यः ॥ **प्राक्कडारात्समासः २-१-३** कडाराः कर्मधारय इत्यतः प्राक्समास इत्यधिक्रियते ॥ **सह सुपा २-१-४** सुप् सुपा सह वा समस्यते । समासत्वात् प्रातिपदिकत्वेन सुपो लुक् । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः । परार्थाभिधानं वृत्तिः; वृत्त्यर्थावबोधकं वाक्यं विग्रहः; स च लौकिकोऽलौकिकश्चेति द्विधा; तत्र पूर्वं भूत इति लौकिकः; पूर्व+अम्+भूत+सु, इत्यलौकिकः । 'भूतपूर्वे चर' डिति निर्देशाद्भूतस्य पूर्वनिपातः । भूतपूर्वः ॥ *__इवेन सह समासो विभक्त्यलोपश्च [वा १२३६-१३४१]__ वागर्थसदृशौ वागर्थाविव ॥

॥ इति केवलसमासप्रकरणम् ॥

## ॥ अथ अव्ययीभावसमासप्रकरणम् ॥

---

**अव्ययीभावः २-१-५** अधिकारोऽयम् प्राक्तत्पुरुषात् ॥ **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २-१-६** विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते। प्रायेणाविग्रहोऽस्वपदविग्रहो वा नित्यसमासः। विभक्तौ—हरि+ङि+अधि, इति स्थिते—**प्रथमानिर्दिष्टं समास उपसर्जनम् १-२-४३** समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनं स्यात् ॥ **उपसर्जनं पूर्वम् २-२-३०** समासे उपसर्जनं प्राक्प्रयोज्यम्। इत्यधेः प्राक्प्रयोगः। समासत्वेन प्रातिपदिकसंज्ञायां ङेर्लुक्, ततस्समुदायात् स्वाद्युत्पत्तिः, 'अव्ययीभाव'श्चेत्यव्ययत्वात्तस्य सुपो लुक्। अधिहरि ॥ **अव्ययीभावश्च २-४-१८** अयं [1]नपुंसकं स्यात्। गाः पातीति गोपाः, तस्मिन्नित्यधिगोपम् ॥ **नाव्ययीभावादतोऽम्त्वपञ्चम्याः २-४-८३** अदन्तादव्ययीभावात्सुपो न लुक्। तस्य पञ्चमीं विना अमादेशः ॥ **तृतीयासप्तम्योर्बहुलम् २-४-८४** अदन्तादव्ययीभावात् तृतीयासप्तम्योर्बहुलमम्भावः। उपकृष्णम्, उपकृष्णेन, मद्राणां समृद्धिः। सुमद्रम् यवनानां व्यृद्धिर्दुर्यवनम्, मक्षिकाणामभावो निर्मक्षिकम्, हिमस्यात्ययोऽतिहिमम्, निद्रा सम्प्रति न युज्यत इत्यतिनिद्रम्, हरिशब्दस्य प्रकाश इतिहरि, विष्णोः पश्चादनुविष्णु।

---

1 'स नपुंसकम्' इति पूर्वसूत्रादनुवृत्तिः ॥

योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः; रूपस्य योग्यमनुरूपम्, अर्थमर्थं प्रति प्रत्यर्थम्, शक्तिमनतिक्रम्य यथाशक्ति ॥ **अव्ययीभावे चाकाले ६-३-८१** [1]सहस्य सस्स्यादव्ययीभावे न तु काले। हरेस्सादृश्यं सहरि, ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्, चक्रेण युगपत् सचक्रम्, सदृशस्सख्या ससखि। यथार्थत्वेनैव सिद्धे पुनस्सादृश्यग्रहणाद्गुणभूतेऽपि सादृश्ये समासः। क्षत्राणां सम्पत्तिः सक्षत्रम्, तृणमप्यपरित्यज्य सतृणमत्ति, अग्निग्रन्थपर्यन्तमधीते साग्नि, 'विभाषे'त्यधिकृत्य ॥ **नदीभिश्च २-१-२०** नदीभिस्सह सङ्ख्या वा समस्यते। समाहारे चायमिष्यते। पञ्चगङ्गम्, द्वियमुनम् ॥ **तद्धिताः ४-१-७६** आपञ्चमसमाप्तेरधिकारोऽयम् ॥ **अव्ययीभावे शरत्प्रभृतिभ्यः ५-४-१०७** शरदादिभ्य [2]ष्टच् स्यात् समासान्तोऽव्ययीभावे। शरदस्समीपमुपशरदम्। प्रतिविपाशम्। 'जराया जरस् च' उपजरसम्—इत्यादि ॥ **अनश्च ५-४-१०८** अन्नन्तादव्ययीभावाट्टच् ॥ **नस्तद्धिते ६-४-१४४** नान्तस्य भस्य टे[3]र्लोपस्तद्धिते। उपराजम्, अध्यात्मम् ॥ **नपुंसकादन्यतरस्याम् ५-४-१०९** अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा। उपचर्मम्, उपचर्म ॥ **झयः ५-४-१११** झयन्तादव्ययीभावाट्टच् वा। उपसमिधम्, उपसमित् ॥

॥ इति अव्ययीभावप्रकरणम् ॥

---

1 'सहस्य सस्संज्ञायाम्' इत्यतः सहस्य स इत्यनुवर्तते ॥ 2 'राजाहस्सखिभ्यष्टच्' इत्यतः टच् इत्यनुवर्तते ॥ 3 'अल्लोपोऽनः' इति सूत्राल्लोप इति 'टेः' इति पूर्वसूत्रं चानुवर्तते ॥

## ॥ अथ तत्पुरुषसमासप्रकरणम् ॥

**तत्पुरुषः २-१-२२** अधिकारोऽयम् प्राग्बहुव्रीहेः ॥ **द्विगुश्च २-१-२३** तत्पुरुषसंज्ञकः ॥ **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २-१-२४** द्वितीयान्तं श्रितादिप्रकृतिकैस्सुबन्तैस्सह [1]वा समस्यते । कृष्णं श्रितः कृष्णश्रितः इत्यादि ॥ **तृतीया तत्कृतार्थेन गुणवचनेन २-१-३०** तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत् । शङ्कुलया खण्डश्शङ्कुलाखण्डः, धान्येनार्थो धान्यार्थः, तत्कृतेति किम्? अक्ष्णा काणः ॥ **कर्तृकरणे कृता बहुलम् २-१-३२** कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरित्रातः, नखभिन्नः ॥ [परि] ***कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्** ॥ नखनिर्भिन्नः ॥ **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २-१-३६** चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् । यूपाय दारु यूपदारु । तदर्थेन प्रकृतिविकृतिभाव एवेष्टः । तेनेह न । रन्धनाय स्थाली ॥ ***अर्थेन सह नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्** [वा १२७३-१२७४] द्विजायायं द्विजार्थस्सूपः । द्विजार्था यवागूः, द्विजार्थं पयः, भूतबलिः, गोहितम्, गोसुखं, गोरक्षितम् ॥ **पञ्चमी भयेन २-१-३७** चोराद्भयं चोरभयम् ॥ ***भयभीत भीति भीभि रिति वाच्यम्** [वा-१२७५ वृकभीत इत्यादि ॥ **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन**

---

1 विभाषेति पूर्वसूत्रानुवृत्तिः ॥

२-१-३९ पञ्चम्यास्स्तोकादिभ्यः ६-३-२ अलुगुत्तरपदे । स्तोकान्मुक्तः, अन्तिकादागतः, अभ्याशादागतः, दूरादागतः कृच्छ्रादागतः ॥ षष्ठी २-२-८ सुबन्तेन प्राग्वत् । राजपुरुषः ॥ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २-२-१ अवयविना सह पूर्वादयस्समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः, अपरकायः । एकाधिकरणे किम्? पूर्वश्छात्राणाम् ॥ अर्धं नपुंसकम् २-२-२ समांशवाच्यर्धशब्दो नित्यं क्लीबे प्राग्वत् । अर्धं पिप्पल्या अर्धपिप्पली ॥ सप्तमी शौण्डैः २-१-४० सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्डः इत्यादि । 'द्वितीया तृतीये'त्यादि योगविभागादन्यत्रापि द्वितीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः ॥ दिक्संख्ये संज्ञायाम् २-१-५० संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी, सप्तऋषयः सप्तर्षयः । नियमान्नेह । उत्तरा वृक्षाः, पञ्च ब्राह्मणाः । तद्धितार्थोत्तरपदसमाहारे च २-१-५१ तद्धितार्थे विषये उत्तरपदे च परतस्समाहारे च वाच्ये दिक्संख्ये प्राग्वद्वा । पूर्वस्यां शालायां भवः पूर्वाशाला इति समासे जाते—*सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः [वा १३७६] दिक्पूर्वपदादसंज्ञायां ञः ४-२-१०७ अस्माद्भवाद्यर्थे ञस्स्यादसंज्ञायाम् ॥ तद्धितेष्वचामादेः ७-२-११७ ञिति णिति च तद्धितेऽचामादेरचो वृद्धिस्स्यात् । 'यस्येति च' पौर्वशालः पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ—*द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् [वा १२८७] गोरतद्धितलुकि ५-४-९२

गोऽन्तात्तत्पुरुषाट्टच् स्यात्समासान्तो न तु तद्धितलुकि। पञ्चगवधनः ॥ **तत्पुरुषस्समानाधिकरणः कर्मधारयः १-२-४२** **संख्यापूर्वो द्विगुः २-१-५२** तद्धितार्थेत्यत्रोक्तस्त्रिविधस्संख्यापूर्वो द्विगुसंज्ञस्स्यात् ॥ **द्विगुरेकवचनम् २-४-१** द्विग्वर्थस्समाहार एकवत्स्यात् ॥ **स नपुंसकम् २-४-१७** समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः पञ्चगवम् ॥ **विशेषणं विशेष्येण बहुलम् २-१-५७** भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात् क्वचिन्नित्यं। कृष्णसर्पः। क्वचिन्न। रामो जामदग्न्यः ॥ **उपमानानि सामान्यवचनैः २-१-५५** घनश्यामः ॥ ***शाकपार्थिवादीनां सिद्धये उत्तरपदलोपो वक्तव्यः** [वा १३१०] शाकप्रियः पार्थिवः शाकपार्थिवः, देवब्राह्मणः ॥ **नञ् २-२-६** नञ् सुपा प्राग्वत् ॥ **न लोपो नञः ६-३-७३** नञो नस्य लोप उत्तरपदे। अब्राह्मणः ॥ **तस्मान्नुडचि ६-३-७४** लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुट्। अनश्वः, नैकधेत्यादौ तु नशब्देन सह 'सुप्सुपे'ति समासः। 'नित्यं क्रीडे'त्यतो नित्यमित्यनुवर्तमाने—**कुगति प्रादयः २-२-१८** एते समर्थेन नित्यं समस्यन्ते। कुत्सितपुरुषः कुपुरुषः ॥ **ऊर्यादिच्विडाचश्च १-४-६१** ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञास्स्युः। ऊरीकृत्य, शुक्लीकृत्य, पटपटाकृत्य, सुपुरुषः ॥ ***प्रादयो गताद्यर्थे प्रथमया** [वा १३३५] प्रगत आचार्यः प्राचार्यः ॥ ***अत्यादयः क्रान्ताद्यर्थे द्वितीयया** [वा-१४३६] अतिक्रान्तो मालामिति विग्रहे ॥ **एकविभक्ति चापूर्वनि-**

पाते १-२-४४ विग्रहे यन्नियतविभक्तिकं तदुपसर्जनं न तु तस्य पूर्वनिपातः। **गोस्त्रियोरुपसर्जनस्य १-२-४८** उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः। अतिमालः॥ *अवादयः क्रुष्टाद्यर्थे तृतीयया [वा १३३७] अवक्रुष्टः कोकिलया अवकोकिलः॥ *पर्यादयो ग्लानाद्यर्थे चतुर्थ्या [वा १३३८] परिग्लानोऽध्ययनाय पर्यध्ययनः॥ *निरादयः क्रान्ताद्यर्थे पञ्चम्या [वा १३३९] निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः॥ **तत्रोपपदं सप्तमीस्थम् ३-१-९२** सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदं स्यात्॥ **उपपदमतिङ् २-२-१९** उपपदं समर्थेन नित्यं समस्यतेऽतिङन्तश्च समासः। कुम्भं करोतीति कुम्भकारः, अतिङ् किम्? मा भवान् भूत्। 'माङि लुङ्' इति सप्तमीनिर्देशान्माङुपपदम्॥ [प] **गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्तेः**। व्याघ्री, अश्वक्रीती, कच्छपी। इत्यादि॥ **तत्पुरुषस्याङ्गुलेस्सङ्ख्याऽव्ययादेः ५-४-८६** सङ्ख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य-द्व्यङ्गुलम्; निर्गतमङ्गुलिभ्यो निरङ्गुलम्॥ **अहस्सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ५-४-८७** एभ्यो रात्रेरच् स्यात्, चात्सङ्ख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्॥ **रात्राह्नाहाः पुंसि २-४-२९** एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अहश्च रात्रिश्चाहोरात्रः, सर्वरात्रः, सङ्ख्यातरात्रः॥ *सङ्ख्यापूर्वं रात्रं क्लीबम् [लि १३७] द्विरात्रं, त्रिरात्रम्॥ **राजाहस्सखिभ्यष्टच् ५-४-९१** एतदन्तात्तत्पुरुषाट्टच्।

परमराजः ॥ **आन्महतस्समानाधिकरणजातीययोः ६-३-४६** महाराजः ॥ **प्रकारवचने जातीयर् ५-३-६८** महाप्रकारो महाजातीयः ॥ **द्व्यष्टनस्सङ्ख्यायामबहुव्रीह्यशीत्योः ६-३-४७** आत् स्यात्। द्वादश, अष्टाविंशतिः ॥ **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २-४-२६** कुक्कुटमयूर्याविमे, मयूरी कुक्कुटाविमौ, अर्धपिप्पली ॥ *द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु न [वा २५४५] पञ्चकपालः पुरोडाशः। प्राप्तो जीविकाम् प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै अलंकुमारिः। अत एव ज्ञापकात्समासः। निष्कौशाम्बिः ॥ **अर्धर्चाः पुंसि च २-४-३१** अर्धर्चादयः पुंसि क्लीबे च स्युः। अर्धर्चः, अर्धर्चम्। एवं ध्वजतीर्थशरीरमण्डपीयूषदेहाङ्कुशकलशपात्र सूत्रादयः ॥ *सामान्ये नपुंसकम् [वा-५०४३] मृदु पचति। प्रातः कमनीयम् ॥ **तत्पुरुषोऽनञ्कर्मधारयः २-४-१९** इत्यधिकृत्य ॥ **छाया बाहुल्ये २-४ २२** छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये। इक्षूणां छाया इक्षुच्छायम्। वक्ष्यमाणविकल्पस्यायमपवादः। **सभा राजाऽमनुष्यपूर्वा २-४-२३** राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात्। इनसभम्, ईश्वरसभम् ॥ **पर्यायस्यैवेष्यते [वा ५१९]** नेह। राजसभा, चन्द्रगुप्तसभा। अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह। रक्षस्सभं, पिशाचसभम् ॥ **विभाषा सेनासुराच्छायाशालानिशानाम् २-४-२५** एतदन्तस्तत्पुरुषो नपुंसकं वा स्यात्। ब्राह्मणसेनम्-ब्राह्मणसेना, यवसुरं-यवसुरा, कुड्यच्छायं-कुड्यच्छाया, गोशालं-गोशाला, श्वनिशं-

श्वनिशा 'तत्पुरुषोऽनञ् कर्मधारयः'। इत्युक्तेर्नेह। दृढसेनो र
असेना, परमसेना॥

॥ इति तत्पुरुषसमासप्रकरणम्॥

## ॥ अथ बहुव्रीहिसमासप्रकरणम् ॥

---

**शेषो बहुव्रीहिः २-२-२३** अधिकारोऽयं प्राग्द्वन्द्वात् ॥ **अनेकमन्यपदार्थे २-२-२४** अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वतमानं वा समस्यते स बहुव्रीहिः ॥ **सप्तमीविशेषणे बहुव्रीहौ २-२-३५** सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥ **हलदन्तात्सप्तम्याःसंज्ञायाम् ६-३-९** हलन्तादन्ताच्च सप्तम्या अलुक् । त्वचिसारः, प्राप्तमुदकं यं प्राप्तोदको ग्रामः, ऊढरथोऽनड्वान्, उपहृतपशू रुद्रः, उद्धृतौदना स्थाली, पीताम्बरो हरिः, वीरपुरुषको ग्रामः ॥ ***प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः [वा १३६०]** प्रपतितः पर्णः प्रपर्णः ॥ ***नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः [वा १३६१]** अविद्यमानः पुत्रोऽपुत्रः ॥ **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६-३-३४** उक्तपुंस्कादनूङ् ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं समानाधिकरणे स्त्रीलिङ्गे न तु पूरण्यां प्रियादिषु । 'गोस्त्रियो' रिति ह्रस्वः । चित्रगुः, रूपवद्भार्यः । अनूङ् किं? । वामोरूभार्यः ॥ **अप् पूरणीप्रमाण्योः ५-४-११६** पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात् प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः, स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः अप्रियादिषु किम्? कल्याणीप्रियः इत्यादि ॥ बहुव्रीहौ

**सक्थ्यक्ष्णोस्स्वाङ्गात् षच् ५-४-११३** स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् । दीर्घसक्थः, जलजाक्षी । स्वाङ्गात्किम्? दीर्घसक्थि शकटम्, स्थूलाक्षा वेणुयष्टिः । 'अक्ष्णोऽदर्शना'दिति वक्ष्यमाणोऽच्॥ **द्वित्रिभ्यां ष मूर्ध्नः ५-४-११५** द्विमूर्धः, त्रिमूर्धः ॥ **अन्तर्बहिर्भ्यां च लोम्नः ५-४-११७** अप् स्यात् । अन्तर्लोमः, बहिर्लोमः ॥ **पादस्य लोपोऽहस्त्यादिभ्यः ५-४-१३८** हस्त्यादिवर्जितादुपमानात्परस्य पादस्य लोपः । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम्? । हस्तिपादः, कुसूलपादः ॥ **सङ्ख्यासुपूर्वस्य ५-४-१४०** लोपस्स्यात् । द्विपात्, सुपात् ॥ **उद्विभ्यां काकुदस्य ५-४-१४८** लोपस्स्यात् । उत्काकुत्, विकाकुत् ॥ **पूर्णाद्विभाषा ५-४-१४९** पूर्णकाकुत्, पूर्णकाकुदः ॥ **सुहृद्दुर्हृदौ मित्रामित्रयोः ५-४-१५०** सुहृन्मित्रम्, दुर्हृदमित्रः ॥ **उरःप्रभृतिभ्यः कप् ५-४-१५१ कस्कादिषु च ८-३-४८** एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः । इति सः । व्यूढोरस्कः, प्रियसर्पिष्कः ॥ **निष्ठा २-२-३६** निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । युक्तयोगः ॥ **शेषाद्विभाषा ५-४-१५४** अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । महायशस्कः, महायशाः ॥

॥ इति बहुव्रीहिसमासप्रकरणम् ॥

## ॥ अथ द्वन्द्वसमासप्रकरणम् ॥

**चार्थे द्वन्द्वः** २-२-२९ अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयस्समुच्चयः ; अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः ; मिलितानामन्वये इतरेतरयोगः ; समूहस्समाहारः तत्र 'ईश्वरं गुरुं च भज'स्वेति समुच्चये 'भिक्षामट गां चानये' त्यन्वाचये च न समासः ; असामर्थ्यात् । धवखदिरौ, संज्ञापरिभाषम् ॥ **राजदन्तादिषु परम्** २-२-३१ एषु पूर्वप्रयोगार्हं परं स्यात्, दन्तानां राजा राजदन्तः ॥ *धर्मादिष्वनियमः [वा १-४-१८] अर्थधर्मौ, धर्मार्थौ, इत्यादि ॥ **द्वन्द्वे घि** २-२-३२ पूर्वं स्यात् । हरिहरौ ॥ **अजाद्यदन्तम्** २-२-३३ ईश कृष्णौ ॥ **अल्पाच्तरम्** २-२-३४ शिवकेशवौ ॥ **पिता मात्रा** १-२-७० मात्रा सहोक्तौ पिता वा शिष्यते । पितरौ, मातापितरौ वा ॥ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** २-४-२ एषां द्वन्द्व एकवत् । पाणिपादम्, मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् ॥ **द्वन्द्वाच्चुदषहान्तात्समाहारे** ५-४-१०६ चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् त्वचम्, त्वक् स्रजम्, शमीदृषदम्, वाक्त्विषम्, छत्रोपानहम् । समाहारे किम्? प्रावृट् शरदौ ॥

॥ इति द्वन्द्वसमासप्रकरणम् ॥

## ॥ अथ समासान्तप्रकरणम् ॥

---

**ऋक् पूरब्धूःपथा मानक्षे** ५-४-७४ अ अनक्ष इति च्छे
ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः । अक्षेया धू, स्तदः
न । अर्धर्चः, विष्णुपुरम्, विमलापं सरः, राजधुरा । अक्षेत्
अक्षधूः, दृढधू रक्षः, सखिपथः, रम्यपथो देशः ॥ **अक्ष्णोऽदर्श**
५-४-७६ अचक्षुःपर्याया दक्ष्णोऽच् स्यात् । गवामक्षीव गवाक्ष
**उपसर्गादध्वनः** ५-४-८५ प्रगतोऽध्वानं प्राध्वो रथः ॥ **न पूज**
५-४-६९ पूजनार्थात्परेभ्यस्समासान्ता न स्युः ॥ **स्वतिभ्य**
[वा ३३४६] सुराजा, अतिराजा ॥

॥ इति समासान्तप्रकरणम् ॥

# ॥ अथ तद्धिताधिकारप्रकरणम् ॥

## ॥ साधारणप्रत्ययप्रकरणम् ॥

**समर्थानां प्रथमाद्वा ४-१-८२** इदमधिक्रियते । प्राग्दिश इति यावत् ॥ **प्राग्दीव्यतोऽण् ४-१-८३** 'तेन दीव्यती 'त्यतः प्रागणधिक्रियते ॥ **अश्वपत्यादिभ्यश्च ४-१-८४** एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु ॥ ***तद्धितेष्वचामादेः** [वा] अश्वपतेरपत्यादि आश्वपतम्, गाणपतम् ॥ **दित्यादित्यादित्यपत्युत्तरपदाण्ण्यः ४-१-८५** प्राग्दीव्यतीयेष्वर्थेषु । दितेरपत्यं दैत्यः, अदितेरादित्यस्य वा आदित्यः, प्राजापत्यः ॥ ***देवाद्यञञौ** [वा २५५५] दैव्यम्-दैवम् ॥ **बहिषष्टिलोपो यञ् च** [वा २५५६] बाह्यः ॥ **ईकक् च** [वा २५५७] **किति च ७-२-११८** अचामादेरचो वृद्धिस्स्यात् । बाहीकः ॥ ***सर्वत्र गोरजादिप्रसङ्गे यत्** [वा] गोरपत्यादि गव्यम् ॥ **उत्सादिभ्योऽञ् ४-१-८६** औत्सः । इत्यपत्यादिविकारान्तार्थसाधारणा प्रत्ययाः ॥

॥ इति साधारणप्रत्ययप्रकरणम् ॥

## ॥ अथ अपत्याधिकारप्रकरणम् ॥

**स्त्रीपुंसाभ्यां नञ् स्नञौ भवनात्** ४-१-८७ धान्यानां भवन इत्यतः प्रागर्थेष्वाभ्यामेतौ स्तः । स्त्रैणः, पौंस्नः ॥ **तस्यापत्यम्** ४-१-९२ षष्ठ्यन्तात् कृतसन्धेस्समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥ **ओर्गुणः** ६-४-१४६ उवर्णान्तस्य भस्य गुणस्तद्धिते । उपगोरपत्यमौपगवः, आश्वपतः, दैत्यः, औत्सः, स्त्रैणः, पौंस्नः ॥ **अपत्यं पौत्रप्रभृति गोत्रम्** ४-१-१६२ अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥ **एको गोत्रे** ४-१-९३ एक एवापत्यप्रत्ययस्स्यात् । उपगोर्गोत्रापत्यमौपगवः ॥ **गर्गादिभ्यो यञ्** ४-१-१०५ गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः, वात्स्यः ॥ **यञञोश्च** २-४-६४ गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः, वत्साः ॥ **जीवति तु वंश्ये युवा** ४-१-१६३ वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात् ॥ **गोत्राद्यून्यस्त्रियाम्** ४-१-९४ यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययस्स्यात् । स्त्रियां तु न युवसंज्ञा ॥ **यञिञोश्च** ४-१-१०१ गोत्रे यौ यञिञौ तदन्तात् फक् ॥ **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ७-१-२ प्रत्ययादेः फस्य आयन् ढस्यैय् खस्य ईन छस्य ईय् घस्य इय् एते स्युः । गर्गस्य युवापत्यं गार्ग्यायणः, दाक्षायणः ॥ **अत इञ्** ४-१-९५ अपत्येऽर्थे । दाक्षिः ॥ **बाह्वादिभ्यश्च** ४-१-९६ बाहविः, औडुलोमिः । आकृतिगणोऽयम् ॥ **अनृष्यानन्तर्ये बिदादिभ्योऽञ्**

४-१-१०४ ये त्वत्रानृषयस्तेभ्योऽनन्तरापत्येऽन्यत्र तु गोत्रे । बिदस्य गोत्रं बैदः, बैदौ, बिदाः । पुत्रस्यापत्यं पौत्रः, पौत्रौ, पौत्राः । एवं दौहित्रादयः ॥ **शिवादिभ्योऽण् ४-१-११२** अपत्ये । शैवः, गाङ्गः **ऋष्यन्धकवृष्णिकुरुभ्यश्च ४-१-११४** ऋषिभ्यः—वासिष्ठः, वैश्वामित्रः । अन्धकेभ्यः—श्वाफल्कः । वृष्णिभ्यः—वासुदेवः । कुरुभ्यः—नाकुलः, साहदेवः ॥ **मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः ४-१-११५** सङ्ख्यादिपूर्वस्य मातृशब्दस्य उदादेशस्स्यादण्प्रत्ययश्च । द्वैमातुरः, षाण्मातुरः, साम्मातुरः, भाद्रमातुरः ॥ **स्त्रीभ्यो ढक् ४-१-१२०** स्त्रीप्रत्ययान्तेभ्यो ढक् । वैनतेयः ॥ **कन्यायाः कनीन च ४-१-११६** चादण् । कानीनो व्यासः-कर्णश्च ॥ **राजश्वशुराद्यत् ४-१-१३७** *__राज्ञो जातावेवेति वाच्यम्__ [वा २६२७] **ये चाभावकर्मणोः ६-४-१६८** यादौ तद्धिते अन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । जातावेवेति किम्? ॥ **अन् ६-४-१६७** अन् प्रकृत्या स्यादणि परे । [1]राजनः, श्वशुर्यः ॥ [2]**क्षत्राद्घः ४-१-१३८** क्षत्रियः । जातावित्येव । क्षात्रिरन्यः ॥ **कुलात्खः ४-१-१३९** कुलीनः । तदन्तादपि; आढ्यकुलीनः ॥ **रेवत्यादिभ्यष्ठक् ४-१-१४६ ठस्येकः ७-३-५०** अङ्गात्परस्य ठस्येकादेशः । रैवतिकः ॥ **जनपदशब्दात् क्षत्रियादञ् ४-१-१६८** जनपदक्षत्रिय-

1 'प्रकृत्यैकाच्' इत्यतः एकाजिति, 'अन्' इति सूत्रं चानुवर्तते ॥

2 शूद्रादिजातीयस्त्रियामुत्पन्न इत्यर्थः ॥ अत्र स्वरूप ग्रहणमात्रम् ॥ नतु पर्यायवाचकानाम् ॥

वाचकाच्छब्दादञपत्ये । पाञ्चालः ॥ *क्षत्रियसमान
त्तस्य राजन्यपत्यवत् [वा २६६९] पञ्चालानां रा
* पुरोरण् [वा २६७०] पौरवः ॥ *पाण्डोर्ड्यण्
पाण्ड्यः ॥ कुरुनादिभ्यो ण्यः ४-१-१७२ कौरव्य
ते तद्राजाः ४-१-१७४ अञादयस्तद्राजसंज्ञास्स्युः
बहुषु तेनैवास्त्रियाम् २-४-६२ बहुष्वर्थेषु तद्राजस्
बहुत्वे न तु स्त्रियाम् । पञ्चालाः, इत्यादि ॥
४-१-१७५ अस्मात्तद्राजस्य लुक् । कम्बोजः,
*कम्बोजादिभ्य इति वक्तव्यम् [वा २६७४]
केरळः, यवनः ॥

॥ इति अपत्याधिकारप्रकरणम् ॥

## ॥ अथ चातुरर्थिकप्रकरणम् ॥

**तेन रक्तं रागात्** ४-२-१ अण् स्यात् । कषायेण रक्तं वस्त्रं काषायम् ॥ **नक्षत्रेण युक्तः कालः** ४-२-३ अण् स्यात् ॥ **तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्** [वा ४२००] पुष्येण युक्तं पौषमहः, पौषी रात्रिः ॥ **लुबविशेषे** ४-२-४ पूर्वेण विहितस्य लुप् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते ॥ अद्य पुष्यः ॥ **दृष्टं साम** ४-२-७ तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम ॥ **वामदेवाड्ड्यड्ड्यौ** ४-२-९ वामदेवेन दृष्टं साम वामदेव्यम् ॥ **परिवृतो रथः** ४-२-१० अस्मिन्नर्थेऽण् प्रत्ययस्स्यात् । वस्त्रेण परिवृतो वास्त्रो रथः ॥ **तत्रोद्धृत ममत्रेभ्यः** ४-२-१४ शरावे उद्धृतः शाराव ओदनः ॥ **संस्कृतं भक्षाः** ४-२-१६ सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत् ते स्युः । भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा भक्षाः ॥ **साऽस्य देवता** ४-२-२४ इन्द्रो देवताऽस्येति ऐन्द्रं हविः । पाशुपतम्, बार्हस्पत्यम् ॥ **शुक्राद्घन्** ४-२-२६ शुक्रियम् ॥ **सोमाट्ट्यण्** ४-२-३० सौम्यम् ॥ **वाय्वृतुपित्रुषसो यत्** ४-२-३१ वायव्यम् । ऋतव्यम् ॥ **रीङृतः** ७-४-२७ [1]अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋतो रीङादेशः । 'यस्येति च' । पित्र्यम्, उषस्यम् ॥ **पितृव्यमातुलमातामहपितामहाः** ४-२-३६ एते निपात्यन्ते । पितुर्भ्राता पितृव्यः, मातुर्भ्राता मातुलः, मातुः पित

---

1 अकृत्सार्वधातुकयोर्दीर्घः च्वौच इति सूत्रद्वयमनुवर्तते ॥

मातामहः, पितुः पिता पितामहः ॥ **तस्य समूहः ४-२-३७** काकानां समूहः काकम् ॥ **भिक्षादिभ्योऽण् ४-२-३८** भैक्षम् । गार्भिणीनां समूहो गार्भिणम् । इह 'भस्याढे तद्धिते' इति पुंवद्भावे कृते—**इनण्यनपत्ये ६-४-१६४** अनपत्यार्थेऽणि इन् प्रकृत्या । तेन 'नस्तद्धिते' इति टिलोपो न । युवतीनां समूहो यौवनम् । शत्रन्तादनुदात्ता 'देरञि' त्यञि यौवतम् ॥ **ग्रामजनबन्धुभ्यस्तल् ४-२-४३** तलन्तं स्त्रियाम् । ग्रामता, जनता, बन्धुता ॥ **गजसहायाभ्यां चेति वक्तव्यम् [वा २७२१]** गजता, सहायता ॥ **अह्नः खः क्रतौ २७२२-२७२३]** अहीनः ॥ **अचित्त-हस्तिधेनोष्ठक् ४-२-४७ इसुसुक्तान्तात्कः ७-३-५१** इस् उस् उक् त् एतदन्तात् परस्य ठस्य कः । साक्तुकम्, हास्तिकम्, धैनुकम् ॥ **तदधीते तद्वेद ४-२-५९ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७-३-३** पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः । किं तु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः ॥ व्याकरण-मधीते वेद वा वैयाकरणः ॥ **क्रमादिभ्यो वुन् ४-२-६१** क्रमकः, पदकः, शिक्षकः, मीमांसकः ॥ **तदस्मिन्नस्तीति देशे तन्नाम्नि ४-२-६७** उदुम्बराः सन्त्यस्मिन् देशे औदुम्बरः ॥ **तेन निर्वृत्तम् ४-२-६८** कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी ॥ **तस्य निवासः ४-२-६९** शिबीनां निवासो देशः शैबः ॥ **अदूरभवश्च ४-२-७०** विदिशाया अदूरभवं वैदिशम् ॥ **जनपदे लुप् ४-२-८१** जनपदे वाच्ये चातुरर्थिकस्य लुप् ॥ **लुपि युक्तवद्व्यक्तिवचने १-२-५१**

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः, कुरवः, अङ्गाः, वङ्गाः, कलिङ्गाः ॥ **वरणादिभ्यश्च ४-२-८२** अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः ॥ **कुमुद नडवेतसेभ्यो ड्मतुप् ४-२-८७ झयः ८-२-१०** झयन्तान्मतोर्मस्य वः । कुमुद्वान्, नड्वान् ॥ **मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८-२-९** मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ॥ **नडशादाड्ड्वलच् ४-२-८८** नड्वलः । शाद्वलः ॥ **शिखाया वलच् ४-२-८९** शिखावलः ॥

॥ इति चातुरर्थिकप्रकरणम् ॥

## ॥ अथ शैषिकप्रकरणम् ॥

शेषे ४-२-९२ अपत्यादिचातुरर्थ्यन्तादन्योऽर्थश्शेषः । तत्राणादयस्स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणश्शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदास्सक्तवः । चतुर्भिरूह्यते चातुरं शकटं । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । 'तस्य विकार' इत्यतः प्राक् शेषाधिकारः । लक्षणं च ॥ राष्ट्राऽवारपाराद्घखौ ४-२-९३ आभ्यां क्रमाद्घखौ स्तः । राष्ट्रे जातादिः राष्ट्रियः । अवारपारीणः ॥ *अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् [वा १७७१-१७७२] अवारीणः पारीणः, पारावारीणः । इह प्रकृतिविशेषाद्घादयष्टयुटयुलन्ताः प्रत्यया उच्यन्ते । तेषां जातादयोऽर्थविशेषास्समर्थविभक्तयश्च वक्ष्यन्ते ॥ ग्रामाद्यखञौ ४-२-९४ ग्राम्यः—ग्रामीणः॥ [1]नद्यादिभ्यो ढक् ४-२-९७ नादेयम्, माहेयम्, वाराणसेयम् ॥ दक्षिणा पश्चात्पुरसस्त्यक् ४-२-९८ दाक्षिणात्यः, पाश्चात्यः, पौरस्त्यः ॥ द्युप्रागपागुदक्प्रतीचो यत् ४-२-१०१ दिव्यम्, प्राच्यम्, अवाच्यम्, उदीच्यम्, प्रतीच्यम् ॥ अव्ययात्त्यप् ४-२-१०४—*अमेहक्वतसित्रेभ्य एव [वा २७७९] अमात्यः, इहत्यः, क्वत्यः, ततस्त्यः, तत्रत्यः ॥ *त्यब्नेर्ध्रुव इति वक्तव्यम्

---

1 नदी, मही, वाराणसी, श्रावस्ती, कौशाम्बी, वनकौशाम्बी, काशपरीकासफरी, खादिरी, पूर्वनगरी, पाठा, माया, शाल्वा, दार्वा, सेतकी (बडबायावृषे) इति नद्यादिः ॥

[वा २७८०] नित्यः ॥ **वृद्धिर्यस्याचामादिस्तद्वृद्धम् १-१-७३** यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ॥ **त्यदादीनि च १-१-७४** वृद्धसंज्ञानि स्युः ॥ **वृद्धाच्छः ४-२-११४** शालीयः, मालीयः, तदीयः ॥ *वा नामधेयस्य वृद्धसंज्ञा वक्तव्या [वा ५७६] देवदत्तीयः, दैवदत्तः ॥ **गहादिभ्यश्च ४-२-१३८** गहीयः ॥ **युष्मदस्मदोरन्यतरस्यां खञ् च ४-३-१** चाच्छः। पक्षेऽण् । युवयोर्युष्माकं वा अयं युष्मदीयः; अस्मदीयः ॥ **तस्मिन्नणि च युष्माकास्माकौ ४-३-२** युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ॥ **तवकममकावेकवचने ४-३-३** एकार्थवाचिनोर्युष्मद-स्मदोस्तवकममकौ स्तः खञ्यणि च । तावकीनः—तावकः । मामकीनः—मामकः । छे तु—**प्रत्ययोत्तरपदयोश्च ७-२-९८** मपर्यन्तयोरनयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः । त्वदीयः, मदीयः । त्वत्पुत्रः, मत्पुत्रः ॥ **मध्यान्मः ४-३-८** मध्यमः ॥ **कालाट्ठञ् ४-३-११** कालवाचिभ्यष्ठञ् स्यात् । कालिकम्, मासिकम्, सांवत्सरिकम् ॥ *अव्ययानां भमात्रे टिलोपः [वा ४१८७] सायं प्रातिकः, पौनः पुनिकः ॥ **प्रावृष एण्यः ४-३-१७** प्रावृषेण्यः ॥ **सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४-३-२३** सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । तुटः प्रागनादेशः । तेन 'अनद्यतन' इति निर्देशस्सङ्गच्छते । सायन्तनं, चिरन्तनं । प्राह्णे प्रगे अनयोरेदन्तत्वं

निपात्यते । प्राह्णेतनं, प्रगेतनं, दोषातनम् ॥ **तत्र जातः ४-३-२५** सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । उत्से जातः औत्सः । राष्ट्रे जातः राष्ट्रियः । अवारपारे जातः अवारपारीणः इत्यादि ॥ **प्रावृषष्ठप् ४-३-२६** एण्यापवादः । प्रावृषिकः ॥ **प्रायभवः ४-३-३९** तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः ॥ **सम्भूते ४-३-४१** स्रुघ्ने सम्भवति स्रौघ्नः ॥ **कोशाड्ढञ् ४-३-४२** कौशेयं वस्त्रम् ॥ **तत्र भवः ४-३-५३** स्रौघ्नः, औत्सः, राष्ट्रियः ॥ **दिगादिभ्यो यत् ४-३-५४** दिश्यं, वर्ग्यम् ॥ **शरीरावयवाच्च ४-३-५५** दन्त्यं, कण्ठ्यम् ॥ *अध्यात्मादेष्ठञिष्यते [वा २८६९] अध्यात्मं भवमाध्यात्मिकम् ॥ **अनुशतिकादीनां च ७-३-२०** एषामुभयपदवृद्धिर्ञिति णिति किति च । आधिदैविकं, आधिभौतिकं, ऐहलौकिकम् । आकृतिगणोऽयम् ॥ **जिह्वामूलाङ्गुलेश्छः ४-३-६२** जिह्वामूलीयम् । अङ्गुलीयम् ॥ **वर्गान्ताच्च ४-३-६३** कवर्गीयम् ॥ **तत आगतः ४-३-७४** स्रुघ्नादागतस्स्रौघ्नः ॥ **ठगायस्थानेभ्यः ४-३-७५** शुल्कशालाया आगतश्शौल्कशालिकः ॥ **विद्यायोनिसम्बन्धेभ्यो वुञ् ४-३-७७** औपाध्यायकः, पैतामहकः ॥ **हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ४-३-८१** समादागतं समरूप्यं । पक्षे गहादित्वाच्छः । समीयम् विषमीयम् । देवदत्तरूप्यं—दैवदत्तम्—देवदत्तीयम् ॥ **मयट् च ४-३-८२** सममयम्, देवदत्तमयम् ॥ **प्रभवति ४-३-८३** हिमवतः प्रभवति हैमवती गङ्गा ॥ **तद्गच्छति पथिदूतयोः ४-३-८५**

स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ॥ अभिनिष्क्रामति द्वारम् ४-३-८६ स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् ॥ अधिकृत्य कृते ग्रन्थे ४-३-८७ शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः ; 'शारीरकं भाष्य'मिति त्वभेदोपचारात् ॥ सोऽस्य निवासः ४-३-८९ स्रुघ्नो निवासोऽस्य स्रौघ्नः ॥ तेन प्रोक्तम् ४-३-१०१ पाणिनिना प्रोक्तं पाणिनीयम् ॥ तस्येदम् ४-३-१२० उपगोरिदमौपगवम् ॥

॥ इति शैषिकप्रकरणम् ॥

## ॥ अथ प्राग्दीव्यतीयप्रकरणम् ॥

---

**तस्य विकारः ४-३-१३४** *अश्मनो विकारे टिलोपो वक्तव्यः [वा ४१८५] अश्मनो विकारः आश्मः । भास्मनः। मार्तिकः ॥ **अवयवे च प्राण्यौषधिवृक्षेभ्यः ४-३-१३५** चाद्विकारे । मयूरस्यावयवो विकारो वा मायूरः । मौर्वम् काण्डं भस्म वा । पैप्पलम् ॥ **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ४-३-१४३** प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः । अश्ममयम्-आश्मनम् । अभक्ष्येत्यादि किम्? मौद्गस्सूपः ; कार्पासमाच्छादनम् ॥ **नित्यं वृद्धशरादिभ्यः ४-३-१४४** आम्रमयम् ॥ **गोश्च पुरीषे ४-३-१४५** गोमयम् ॥ **गोपयसोर्यत् ४-३-१६०** गव्यम्, पयस्यम् ॥

॥ इति प्राग्दीव्यतीयप्रकरणम् ॥

## ॥ अथ ठगधिकारप्रकरणम् ॥

प्राग्वहतेष्ठक् ४-४-१ 'तद्वहती'त्यतः प्राक् ठगधिक्रियते ॥ **तेन दीव्यति खनति जयति जितम्** ४-४-२ अक्षैर्दीव्यति खनति जयाति जितं वा आक्षिकम् ॥ **संस्कृतम्** ४-४-३ दध्ना संस्कृतं दाधिकम् । मारिचिकम् ॥ **तरति** ४-४-५ उडुपेन तरति औडुपिकः ॥ **चरति** ४-४-८ हस्तिना चरति हास्तिकः, दध्नाचरति भक्षयति दाधिकः ॥ **संसृष्टे** ४-४-२२ दध्ना संसृष्टं दाधिकम् ॥ **उञ्छति** ४-४-३२ बदराण्युञ्छति बादरिकः ॥ **रक्षति** ४-४-३३ समाजं रक्षति सामाजिकः ॥ **शब्ददर्दुरं करोति** ४-४-३४ शब्दङ्करोति शाब्दिकः, दर्दुरं करोति दार्दुरिकः ॥ **धर्मं चरति** ४-४-४१ धार्मिकः ॥ ***अधर्माच्चेति वक्तव्यम्** [वा २९६६] अधार्मिकः ॥ **शिल्पम्** ४-४-५५ मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । **प्रहरणम्** ४-४-५७ असिः प्रहरणमस्य आसिकः; धानुष्कः ॥ **शीलम्** ४-४-६१ अपूपभक्षणं शीलमस्य आपूपिकः ॥ **निकटे वसति** ४-४-७३ नैकटिको भिक्षुकः ॥

॥ इति ठगधिकारप्रकरणम् ॥

## ॥ अथ प्राग्घितीयप्रकरणम् ॥

---

**प्राग्घिताद्यत्** ४-४-७५ 'तस्मै हित' मित्यतः प्राग्यदधिक्रियते ॥ **तद्वहति रथयुगप्रासङ्गम्** ४-४-७६ रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ॥ **धुरो यड्ढकौ** ४-४-७७ धुर्यः, धौरेयः ॥ **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु** ४-४-९१ नावा तार्यं नाव्यं जलं । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्यं मूल्यं । मूलेन समो मूल्यः । सीतया सम्मितं सीत्यं क्षेत्रं । तुलया सम्मितं तुल्यम् ॥ **तत्र साधुः** ४-४-९८ अग्रे साधुः अग्र्यः । सामसु साधुः सामन्यः । कर्मण्यः, शरण्यः ॥ **सभाया यः** ४-४-१०५ सभ्यः । इति यतोऽवधिः ॥

॥ इति प्राग्घितीयप्रकरणम् ॥

## ॥ अथ छयद्विधिप्रकरणम् ॥

प्राक्क्रीताच्छः ५-१-१ तेन क्रीतमित्यर्थः । प्राक् छोऽधिक्रियते ॥ उगवादिभ्यो यत् ५-१-२ उवर्णान्ताद्गवादिभ्यश्च यत् । छस्यापवादः । शङ्कव्यं दारु । गव्यम् ॥ *नाभिनभं च [गण ९५] नभ्योऽक्षः; नभ्यमञ्जनम् ॥ तस्मै हितम् ५-१-५ वत्सेभ्यो हितो वत्सीयो गोधुक् ॥ शरीरावयवाद्यत् ५-१-६ दन्त्यम्, कण्ठ्यम्, नस्यम् ॥ आत्मन्विश्वजनभोगोत्तरपदात् खः ५-१-९ आत्माध्वानौ खे ६-४-१६९ एतौ खे प्रकृत्या स्तः । आत्मने हितमात्मनीनम् । विश्वजनीनम् । मातृभोगीणः ॥ इति तद्धिते छयतोः पूर्णोऽऽवधिः ॥

॥ इति छयद्विधिप्रकरणम् ॥

## ॥ अथ आर्हीयप्रकरणम् ॥

**प्राग्वतेष्ठञ्** ५-१-१८ 'तेन तुल्य' मित्यतः प्राक् ठञधिक्रियते ॥ **तेन क्रीतम्** ५-१-३७ सप्तत्या क्रीतं साप्ततिकम्; प्रास्थिकम् ॥ **तस्येश्वरः** ५-१-४२ **तत्र विदित इति च** ५-१-४३ सर्वभूमिपृथिवीभ्यामणञौ स्तः ॥ **अनुशतिकादीनां च** ७-३-२० सर्वभूमेरीश्वरः विदितो वा सार्वभौमः; पार्थिवः ॥ **पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्** ५-१-५९ एते रूढशब्दा निपात्यन्ते ॥ **तदर्हति** ५-१-६३ श्वेतछत्रमर्हति श्वैतच्छत्रिकः ॥ **दण्डादिभ्यो यत्** ५-१-६६ एभ्यो यत् । दण्डमर्हति दण्ड्यः; अर्घ्यः, वध्यः ॥ **तेन निर्वृत्तम्** ॥ ५-१-७९ अह्ना निर्वृत्तमाह्निकम् ॥ इति ठञोऽवधिः ॥

॥ इति आर्हीयप्रकरणम् ॥

## ॥ अथ नञ्स्नञधिकारप्रकरणम् ॥

**तेन तुल्यं क्रिया चेद्वतिः ५-१-११५** ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । 'क्रियाचेत्' किम्? गुणतुल्ये माभूत् । पुत्रेण तुल्यः स्थूलः ॥ **तत्र तस्येव ५-१-११६** मधुरायामिव मधुरावत् स्रुघ्ने प्राकारः; चैत्रस्येव चैत्रवन्मैत्रस्य भावः ॥ **तस्य भावस्त्वतलौ ५-१-११९** प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम्; 'त्वान्तं क्लीबम्' [लि १२०] 'तलन्तं स्त्रियाम्' [लि १७] **आच त्वात् ५-१-१२०** 'ब्रह्मणस्त्व' इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैस्सह समावेशार्थमिदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः स्त्रैणम्-स्त्रीत्वम्-स्त्रीता । पौंस्नं-पुंस्त्वम्-पुंस्ता ॥ **पृथ्वादिभ्य इमनिज्वा ५-१-१२२** वावचनमणादिसमावेशार्थम् ॥ **र ऋतो हलादेर्लघोः ६-४-१६१** हलादेर्लघोः ऋकारस्य रस्स्यात् [1]इष्ठेमेयस्सु ॥ **टेः ६-४-१५५** भस्य टेर्लोप इष्ठेमेयस्सु । पृथुमृदुभृशकृशदृढपरिबृढानामेव रत्वं । पृथोर्भावः प्रथिमा । पार्थिवम् । म्रदिमा, मार्दवम् ॥ **वर्णदृढादिभ्यः ष्यञ् च ५-१-१२३** चादिमनिच् । शौक्ल्यं, शुक्लिमा । दार्ढ्यं, द्रढिमा ॥ **गुणवचनब्राह्मणादिभ्यः कर्मणि च ५-१-१२४** चाद्भावे । जडस्य भावः कर्म वा जाड्यं । मूढस्य भावः कर्म वा । मौढ्यं, ब्राह्मण्यं । आकृतिगणो-

---

1 'तुरिष्ठेमेयस्सु' इत्यतः इष्ठेमेयस्सु इत्यनुवर्तते । इष्ठनि इमनि ईयसि च परे इत्यर्थः ॥

ऽयम् ॥ सख्युर्यः ५-१-१२६ सख्यम् ॥ कपिज्ञात्योर्ढक् ५-१-१२७ कापेयं, ज्ञातेयम् ॥ पत्यन्तपुरोहितादिभ्यो यक् ५-१-१२८ सैनापत्यं, पौरोहित्यम् ॥

॥ इति नञ्स्नञधिकारप्रकरणम् ॥

## ॥ अथ पाञ्चमिकप्रकरणम् ॥

---

धान्यानां भवने क्षेत्रे खञ् ५-२-१ मुद्गानां भवनं क्षेत्रं ौद्गीनम् ॥ व्रीहिशाल्योर्ढक् ५-२-२ व्रैहेयम्, शालेयम् ॥ यङ्गवीनं संज्ञायाम् ५-२-२३ नवनीते निपातितोऽयम् ॥ तदस्य ञ्जातं तारकादिभ्य इतच् ५-२-३६ तारकास्सञ्जाता अस्य ारकितं नभः । पण्डितः । आकृतिगणोऽयम् ॥ प्रमाणे द्वयस द्घ्नञ्मात्रचः ५-२-३७ ऊरू प्रमाणमस्य ऊरुद्वयसम्; ऊरुदघ्नम्, ऊरुमात्रम् ॥ यत्तदेतेभ्यः परिमाणे वतुप् ५-२-३९ यत्परिमाण-ास्य यावान् । तावान् । एतावान् ॥ सङ्ख्याया अवयवे तयप् ५-२-४२ पञ्चावयवा अस्य पञ्चतयम् ॥ द्वित्रिभ्यां तयस्यायज्वा ५-२-४३ द्वयम्-द्वितयम्, त्रयम्-त्रितयम् ॥ उभादुदात्तो नित्यम् ५-२-४४ उभयम् ॥

॥ इति पाञ्चमिकप्रकरणम् ॥

## ॥ अथ मत्वर्थीयप्रकरणम् ॥

---

**तस्य पूरणे डट्** ५-२-४८ एकादशानां पूरण एकादशः ॥ **नान्तादसङ्ख्यादेर्मट्** ५-२-४९ मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात् किम्? विंशः ॥ **ति विंशतेर्डिति** ६-४-१४२ विंशतेर्भस्य तिशब्दस्य लोपो डिति परे । विंशः । असङ्ख्यादेः किम्? एकादशः ॥ **षट् कति कतिपय चतुरां थुक्** ५-२-५१ डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यात एव डट् । कतिपयथः । चतुर्थः ॥ **द्वे स्तीयः** ५-२-५४ डटोऽपवादः । द्वयोः पूरणो द्वितीयः ॥ **त्रेस्सम्प्रसारणं च** ५-२-५५ तृतीयः ॥ **श्रोत्रियञ्छन्दोऽधीते** ५-२-८४ श्रोत्रियः । वेत्यनुवृत्तेश्छान्दसः ॥ **पूर्वादिनिः** ५-२-८६ पूर्वं ज्ञातमनेन पूर्वी ॥ **सपूर्वाच्च** ५-२-८७ कृतपूर्वी ॥ **इष्टादिभ्यश्च** ५-२-८८ इष्टमनेन इष्टी । अधीती ॥ **तदस्यास्त्यस्मिन्निति मतुप्** ५-२-९४ गावोऽस्यास्मिन्वा सन्ति गोमान् ॥ **तसौ मत्वर्थे** १-४-१९ तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये । सम्प्रसारणम् । विदुष्मान् ॥ **गुणवचनेभ्यो मतुपो लुगिष्टः** [वा ३१८५] शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः ॥ **प्राणिस्थादातो लजन्यतरस्याम्** ५-२-९६ चूडालः चूडावान् । प्राणिस्थात् किम्? शिखावान् दीपः ॥ **प्राण्यङ्गादेव** [वा ३१८९] सेह-मेधावान् ॥ **लोमादि पामादि पिच्छादिभ्यश्शनेलचः** ५-२-१०० लोमादिभ्यश्शः । लोमशः-लोमवान् । 'पामादिभ्यो नः' पामनः ॥

अङ्गात्कल्याणे [गण ११८] अङ्गना ॥ *लक्ष्म्या अच्च [गण १२१] लक्ष्मणः । 'पिच्छादिभ्य इलच्' पिच्छिलः-पिच्छवान् ॥ दन्त उन्नत उरच् ५-२-१०६ उन्नता दन्ताः अस्य दन्तुरः ॥ केशाद्वोऽन्यतरस्याम् ५-२-१०९ केशवः-केशवान् ॥ अन्येभ्योऽपि दृश्यते [वा ३२१०] मणिवः ॥ *अर्णसो लोपश्च [वा ५०५३] अर्णवः ॥ अत इनि ठनौ ५-२-११५ दण्डी-दण्डिकः ॥ व्रीह्यादिभ्यश्च ५-२-११६ व्रीही-व्रीहिकः ॥ अस्माया मेधा स्रजो विनिः ५-२-१२१ यशस्वी-यशस्वान्; मायावी, मेधावी, स्रग्वी ॥ वाचो ग्मिनिः ५-२-१२४ वाग्मी ॥ अर्श आदिभ्योऽच् ५-२-१२७ अर्शसः । आकृतिगणोऽयम् ॥

॥ इति मत्वर्थीयप्रकरणम् ॥

## ॥ अथ प्राग्दिशीयप्रकरणम् ॥

---

**प्राग्दिशो विभक्तिः** ५-३-१ दिक् शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञास्स्युः ॥ **किं सर्वनाम बहुभ्योऽद्व्यादिभ्यः** ५-३-२ किमस्सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते **पञ्चम्यास्तसिल्** ५-३-७ पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात् ॥ **कु तिहोः** ७-२-१०४ किमः कुस्तादौ हादौ च विभक्तौ । कुतः, कस्मात् ॥ **इदम इश्** ५-३-३ प्राग्दिशीये । इतः । **एतदोऽन्** ५-३-५ प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । अतः अमुतः, यतः, ततः, बहुतः । द्व्यादेस्तु—द्वाभ्याम् ॥ **पर्यभिभ्यां च** ५-३-९ तसिल् । परितः, सर्वत इत्यर्थः । अभितः उभयत इत्यर्थः ॥ **सप्तम्यास्त्रल्** ५-३-१० कुत्र, यत्र, बहुत्र । **इदमो हः** ५-३-११ त्रलोऽपवादः । इह ॥ **किमोऽत्** ५-३-१२ वा स्यात् ॥ **क्वाति** ७-२-१०५ किमः । क्व, कुत्र ॥ **इतराभ्योऽपि दृश्यन्ते** ५-३-१४ पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादय दृश्यन्ते ॥ **दृशिग्रहणाद्भवदादियोग एव** [वा ३२४४] स भवान् ततोभवान्, तत्रभवान्, ततोभवन्तं, तत्रभवन्तं एवं दीर्घायुः देवानांप्रियः, आयुष्मान् ॥ **सर्वैकान्य किं यत्तदः काले दा** ५-३-१५ सप्तम्यन्तेभ्यः कालार्थे दा स्यात् ॥ **सर्वस्य सोऽन्यतरस्यां दि** ५-३-६ दादौ प्राग्दिशीये सर्वस्य सो वा । सर्वस्मिन् काले सदा सर्वदा, अन्यदा, कदा, यदा, तदा । काले किम्? सर्वत्र देशे ।

दमोर्हिल् ५-३-१६ सप्तम्यन्तात् ॥ एतेतौ रथोः ५-३-४ इदमः एत' 'इत्' एतौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । ासिन् काले एतर्हि; काले किम्? इह देशे ॥ अनद्यतने र्हिलन्य- ारस्याम् ५-३-२१ कर्हि-कदा, यर्हि-यदा, तर्हि-तदा ॥ एतदः ५-३-५ 'एत' 'इत्' एतौ स्तो रेफादौ थादौ च प्राग्दिशीये । तस्मिन् काले एतर्हि ॥ प्रकारवचने थाल् ५-३-२३ प्रकार- त्तिभ्यः किमादिभ्यस्थाल् । तेन प्रकारेण तथा ॥ इदमस्थमुः ५-३-२४ थालोऽपवादः *एतदो वाच्यः [वा ३२३५] अनेन तेन वा प्रकारेण इत्थं ॥ किमश्च ५-३-२५ केन प्रकारेण कथम् ॥

॥ इति प्राग्दिशीयप्रकरणम् ॥

## ॥ अथ प्रागिवीयप्रकरणम् ॥

अतिशायने तमबिष्ठनौ ५-३-५५ अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः । अयमेषामतिशयेनाढ्यः आढ्यतमः; लघुतमः लघिष्ठः ॥ तिङश्च ५-३-५६ तिङन्तादतिशये द्योत्ये तमप् स्यात् ॥ तरप्तमपौ घः १-१-२२ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५-४-११ किम दन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुस्स्यान्न तु द्रव्यप्रकर्षे । किं- तमाम् । प्राह्णेतमाम् । पचतितमां । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चै- स्तमस्तरुः ॥ द्विवचनविभज्योपपदे तरबीयसुनौ ५-३-५७ द्वयो- रेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरप-

वादः। अयमनयोरतिशयेन लघुर्लघुतरः-लघीयान् उदीच्याः प्राच्येभ्य
पटुतराः-पटीयांसः ॥ **प्रशस्यस्य श्रः** ५-३-६० इष्ठेयसोः परतः ।
**प्रकृत्यैकाच्** ६-४-१६३ इष्ठादावेकाच्प्रकृत्या स्यात्। श्रेष्ठः-श्रेयान्
**ज्य च** ५-३-६१ प्रशस्यस्य ज्यादेशः इष्ठेयसोः । ज्येष्ठः ॥ **ज्याद**
**दीयसः** ६-४-१६० ज्यायान् । 'आदेः परस्य ।' **बहोर्लोपो भू**
**बहोः** ६-४-१५८ बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः
भूमा-भूयान् ॥ **इष्ठस्य यिट् च** ६-४-१५९ बहोः परस्य इष्ठस
लोपस्याभावो यिडागमश्च । भूयिष्ठः ॥ **विन्मतोर्लुक्** ५-३-६५ इष्ठे
सोः । अतिशयेन स्रग्वी । स्रजिष्ठः-स्रजीयान्; अतिशयेन त्वग्वान्
त्वचिष्ठः-त्वचीयान् ॥ **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** ५-३-६
ईषदूनो विद्वान् विद्वत्कल्पः-विद्वद्देश्यः-विद्वद्देशीयः; पचा
कल्पम् ॥ **विभाषा सुपो बहुच्पुरस्तात्तु** ५-३-६८ ईषदूनः प
बहुपटुः; पटुकल्पः । सुपः किम्? पचति कल्पम् ॥ **प्रागिवात्क**
५-३-७० 'इवे प्रतिकृतौ' इत्यतः प्राकाधिकारः ॥ **अव्ययस**
**नाम्नामकच्प्राक् टेः** ५-३-७१ कापवादः ॥ **अज्ञाते** ५-३-७
कस्यायमश्वोऽश्वकः; उच्चकैः, नीचकैः, सर्वके ॥ **कुत्सिते** ५-३-७
कुत्सितोऽश्वोऽश्वकः ॥ **किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतर**
५-३-९२ अनयोः कतरो वैष्णवः; यतरः; ततरः ॥ **वा बहू**
**जातिपरिप्रश्ने डतमच्** ५-३-९३ जातिपरिप्रश्न इति प्रत्याख्यातमाक
कतमो भवतां कठः; यतमः, ततमः । वाग्रहणमकजर्थम्। यकः, सकः

॥ इति प्रागिवीयप्रकरणम् ॥

## ॥ अथ स्वार्थिकप्रकरणम् ॥

---

**इवे प्रतिकृतौ ५-३-९६** कन् स्यात् । अश्व इव प्रतिकृतिः अश्वकः ॥ **सर्वप्रातिपदिकेभ्यस्स्वार्थे कन्** । अश्वकः ॥ **तत्प्रकृतवचने मयट् ५-४-२१** प्राचुर्येण प्रस्तुतं प्रकृतं, तस्य वचनं प्रतिपादनम् । भावेऽधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमन्नमयं ; अपूपमयं । द्वितीये तु अन्नमयो यज्ञः ; अपूपमयं पर्व ॥ **प्रज्ञादिभ्यश्च ५-४-३८** अण् स्यात् । प्रज्ञ एव प्राज्ञः । दैवतम् ॥ **बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५-४-४२** बहूनि ददाति बहुशः ; अल्पशः । *आद्यादिभ्यस्तसेरुपसङ्ख्यानम् [वा ३३३९] आदौ आदितः । मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण-स्वरतः; वर्णतः ॥ **कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ५-४-५०** *अभूततद्भाव इति वक्तव्यम् [वा ३३४०] विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात् करोत्यादिभिर्योगे ॥ **अस्य च्वौ ७-४-३२** अवर्णस्य ईत् स्याच्वौ । अकृष्णः कृष्णस्सम्पद्यते, तं करोति कृष्णीकरोति । ब्रह्मी भवति । गङ्गी स्यात् ॥ *अव्ययस्य च्वावीत्वं नेति वाच्यम् [वा ५०५२] दोषाभूतमहः । दिवाभूता रात्रिः ॥ **विभाषा साति कात्स्न्र्ये ५-४-५२** च्विविषये सातिर्वा स्यात्साकल्ये ॥ **सात्पदाद्योः ८-३-१११** सस्य षत्वं न । दधि सिञ्चति । कृत्स्नं शस्त्रमग्निस्सम्पद्यतेऽग्निसाद्भवति ॥ **च्वौ च ५-४-२६** दीर्घस्स्यात् । अग्नी भवति ॥

**अव्यक्तानुकरणाद्ध्यजवरार्धादनितौ डाच् ५-४-५७** द्व्यच् अवरं न्यूनम्, न तु ततो न्यूनम्; अनेकाजिति यावत् । तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे *डाचि बहुलं द्वे भवतः [वा ४६९७] इति डाचि विवक्षिते द्वित्वम् ॥ *नित्यमाम्रेडिते डाचीति वक्तव्यम् [वा ३६३८] डाच्परं यदाम्रेडितं तस्मिन् परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तकारपकारयोः पकारः । पटपटाकरोति । अव्यक्तानुकरणात्किम्? दृषत्करोति । द्व्यजवरार्धात्किम्? अत्करोति । अवरेति किम्? खरटखरटाकरोति । अनितौ किम्? पटिति करोति ॥

॥ इति स्वार्थिकप्रकरणम् ॥

तद्धिताधिकारस्समाप्तः ॥

## ॥ अथ स्त्रीप्रत्ययप्रकरणम् ॥

**स्त्रियाम्** ४-१-३ इत्यधिकृत्य ॥ **अजाद्यतष्टाप्** ४-१-४ अजादीनामकारान्तस्य च यद्वाच्यं स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजा, एडका, अश्वा, चटका, मूषिका, बाला, वत्सा, होडा, मन्दा, विलाता, मेधा इत्यादि । गङ्गा, सर्वा । अदन्तात्पृथगजाद्युक्तिर्ङीप्ङीषोर्बाधनाय ॥ **उगितश्च** ४-१-६ उगिदन्तात्प्रातिपदिकान्ङीप्[1] स्त्रियां । भवन्ती । पचन्ती ॥ **अनुपसर्जनात्** ४-१-१४ अधिकारोऽयम् । 'यूनस्ति' रित्यभिव्याप्य ॥ **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** ४-१-१५ अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं तत्स्त्रियां ङीप् । कुरुचरी । नदट् नदी । देवट् देवी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । प्रास्थिकी । यादृशी । इत्वरी ॥

***नञ् स्नञीकक् ख्युन् तरुणतलुनानामुपसंख्यानम्** [वा २४२५] स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यंकरणी । तरुणी[1] । तलुनी ॥ **यञश्च** ४-१-१६ यञन्तान्ङीप् स्त्रियां । अकारलोपे कृते—**हलस्तद्धितस्य** ६-४-१५० हलः परस्य तद्धितयकारस्य लोप इति परे । गार्गी । **प्राचां ष्फ तद्धितः** ४-१-१७ यञन्तात् ष्फो वा स्यात् स च तद्धितः ॥ **षिद्गौरादिभ्यश्च** ४-१-४१ ङीष् स्यात् । गार्ग्यायणी ।

---

1 यद्यप्यनयोः 'वयसि प्रथमे' इत्येव ङीप् सिद्धः । तथापि, गौरादिषु पाठात् ङीषि प्राप्ते इदं वचनम् । गौरादिपाठात् ङीषि तु स्वरे विशेषः ॥

नर्तकी । गौरी । अनड्ही । अनड्वाही । आकृतिगणोऽयम् ॥ **वयसि प्रथमे ४-१-२०** प्रथमवयोवाचिनोऽदन्तान्ङीप् । कुमारी ॥ **द्विगोः ४-१-२१** अदन्ताद्द्विगोर्ङीप् । त्रिलोकी । अजादित्वात्त्रिफला, त्र्यनीका ॥ **वर्णादनुदात्तात्तोपधात्तो नः ४-१-३९** वर्णवाची योऽनुदात्तान्तस्तोपथस्तदन्तादनुपसर्जनाद्वा ङीप् । तकारस्य च नः । एता-एनी, रोहिता-रोहिणी ॥ **वोतो गुणवचनात् ४-१-४४** उदन्ताद्गुणवाचिनो वा ङीप् । मृद्वी-मृदुः ॥ **बह्वादिभ्यश्च ४-१-४५** वा ङीप् । बह्वी-बहुः ॥ ***कृदिकारादक्तिनः [गणः ५०]** रात्रिः-रात्री ॥ ***सर्वतोऽक्तिन्नर्थादित्येके [गण५१]** शकटिः-शकटी ॥ **पुंयोगादाख्यायाम् ४-१-४८** या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीप् । [1]गोपस्य स्त्री गोपी ॥ ***पालकान्तान्न [वा २४६१]** गोपालिका । अश्वपालिका ॥ **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७-३-४४** प्रत्ययस्थात्कात्पूर्वस्याकारस्येकारस्स्यादापि स आप् सुपः परो न चेत् । सर्विका, कारिका । अतः किम्? । नौका । प्रत्ययस्थात्किम्? । शक्नोतीति शका ; असुपः किम्? । बहुपरिव्राजका नगरी॥ ***सूर्याद्देवतायां चाप् [वा २४७१]** सूर्यस्य स्त्री देवता सूर्या ; देवतायां किं? ***सूर्यागस्त्ययोश्छेचङ्याञ्च [वा ४१९९]** यलोपः ।

---

1 हरेः स्त्री, शम्भोः स्त्री, इत्यादौ तु स्त्रीप्रत्ययप्रकरणे अत इत्यनुवृत्तेः ङीप् न भवति । यः तु स्वयमेव गाः पाति सा न तु गोपस्य स्त्री; सा तु गोपा । तत्र गोपशब्दस्य स्वत एव वृत्त्या पुंयोगादवृत्तेः । गोपस्य माता श्वश्रूः मातुलानी वा गोपीति न स्यात्; अत्र जायापत्यात्मकस्यैव पुंयोगस्य विवक्षितत्वात् । दुहिता केकयी देवकी इत्यादयस्तु गौरादौ पाठ्याः ॥

म् ॥ इन्द्र वरुण भव शर्व रुद्र मृड हिमा-
न्चार्याणामानुक् ४-१-४९ ङीप् च। इन्द्रस्य
नी । भवानी । शर्वाणी । रुद्राणी । मृडानी ।
ा २४७२] महद्धिमं हिमानी, महदरण्य-
पे [वा २४७३] दुष्टो यवो यवानी ॥
२४७४] यवनानां लिपिर्यवनानी ॥
तुल्या [वा २४७५] मातुलानी-मातुली,
ी । *आचार्यादणत्वं च [वा २४७७]
ाचार्या । स्वयं व्याख्यात्री ॥ *अर्यक्षत्रि-
२४७८] अर्याणी-अर्या, क्षत्रियाणी-क्षत्रिया ।
॥ क्रीतात्करणपूर्वात् ४-१-५० ङीप् वस्त्र-
नक्रीता ॥ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्
थमुपसर्जनं यत्स्वाङ्गं तदन्तान्ङीष् । केशानति
केशा, चन्द्रमुखी-चन्द्रमुखा । असंयोगोपधा-
सर्जनात्किम्? सुशिखा ॥ न क्रोडादिबह्वचः
श्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । आकृति-
॥ नखमुखात् संज्ञायाम् ४-१-५८ न ङीष् ॥
८-४-३ पूर्वपदस्थान्निमित्तात् परस्य नस्य
कारव्यवधाने । शूर्पणखा, गौरमुखा । संज्ञायां
या ॥ जातेरस्त्रीविषयादयोपधात् ४-१-६३
यां नियतमयोपधं ततो ङीष् । तटी । वृषली ।

कटी । बह्वृची । जातेः किम्? मुण्डा । अस्त्रीविषयात्किम्? बलाका ।
अयोपधात्किम्? क्षत्रिया ॥ *हय गवयमुकयमनुष्यमत्स्यानाम-
प्रतिषेधः [वा २४९५] योपधप्रतिषेधे—हयी । गवयी । मुकयी ।
'हलस्तद्धितस्य' इति यलोपः । मनुषी ॥ *मत्स्यस्य ङ्याम् [वा
४१९८] यलोपः । मत्सी ॥ **इतो मनुष्यजातेः ४-१-६५** ङीप् ।
दाक्षी ॥ **ऊङुतः ४-१-६६** उदन्तादयोपधान्मनुष्यवाचिनः स्त्रिया-
मूङ् । कुरूः । अयोपधात्किम्? अध्वर्युर्ब्राह्मणी ॥ **पङ्गोश्च ४-१-६८**
पङ्गूः ॥ *श्वशुरस्योकाराकारलोपश्च [वा ५०३९] श्वश्रूः ॥
**ऊरूत्तरपदादौपम्ये ४-१-६९** उपमानवाचि पूर्वपदमूरूत्तरपदं यत्
प्रातिपदिकं तस्मादूङ् । करभोरूः ॥ **संहितशफलक्षणवामादेश्च
४-१-७०** अनौपम्यार्थं सूत्रं । संहितोरूः । शफोरूः । लक्षणोरूः ।
वामोरूः ॥ **शार्ङ्गरवाद्यञो ङीन् ४-१-७३** शार्ङ्गरवादेर्यञो योऽ-
कारस्तदन्ताच्च जातिवाचिनो ङीन् । शार्ङ्गरवी । बैदी । ब्राह्मणी ॥
**नृनरयोर्वृद्धिश्च [गण ५४]** नारी ॥ **यूनस्तिः ५-१-७७** युवन्
शब्दात् स्त्रियां तिस्स्यात् । युवतिः ॥

॥ इति स्त्रीप्रत्ययप्रकरणम् ॥

शास्त्रान्तरे प्रविष्टानां बालानां चोपकारिका ।
कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥

॥ इति श्रीवरदराजकृता लघुसिद्धान्तकौमुदी समाप्ता ॥



Printed by
V. Rámaswamy Sastrulu & Sons, at the 'Vavilla' Press, Madras.—1937.